सामवेदीय

# तलवकारोपनिषद्

पण्डितभीमसेनमिश्रश्रोत्रियकृत
संस्कृतनागरीभाष्यद्वयविभूषिता ।

पं० भीमसेन शर्मा ने स्वप्रबन्ध से
ब्रह्मयन्त्रालय-इटावा
में छपाके प्रकाशित किया ॥

वि० स० १९६७ सन् १९१०

द्वितीयवार १०००

मूल्य प्रति पुस्तक =)

Printed and puvlishad by Pandit Brahmadeo sharma at the Brahm Press——ETAWAH.

## भाष्यारम्भः ॥

सर्वा इमा उपनिषदो वेदसारभूता वेदस्वरूपाश्चेति सर्वशिष्टसम्मतम् । तत्र वाजसनेयोपनिषच्छुक्लयजुर्वेदस्य चत्वारिंशत्तमाध्यायकल्पा । अन्याः काश्चिद् ब्राह्मणान्तर्गताः काश्चिच्छाखान्तर्गताः सन्ति तेषु तेषु शाखाब्राह्मणेषु यो यो भागो वेदैकवेद्यब्रह्मणः स्वरूपनिरूपकः स स उपनिषच्छब्दवाच्योऽस्ति । तत्रेयं तलवकारोपनिषत्—सामवेदीयतलवकारशाखान्तर्गता । तत्राष्टभिरध्यायैः कर्मकाण्डं प्रतिपाद्य नवमेऽध्याये ब्रह्मपरोपनिषदुच्यते --तलवकारशाखाचेदानीमप्रचरिता ॥

अब वाजसनेयोपनिषत् के पश्चात् तलवकारोपनिषत् के भाष्य का आरम्भ किया जाता है । ये सब उपनिषत् वेद का सारस्वरूप अथवा वेदस्वरूप हैं ऐसी सब शिष्टपुरुषोंकी सम्मति है । इन में वाजसनेयिसंहितो उपनिषत् शुक्लयजुर्वेदकी वाजसनेयीसंहिताका चालीसवां अध्याय है । तथा अन्य उपनिषत् कोई ब्राह्मण भागों के अन्तर्गत कोई शाखाओं के अन्तर्गत हैं उन२ वेदकी शाखा वा ब्राह्मणों में जो२ भाग वेद से ही जानने योग्य परमेश्वर के स्वरूपका निरूपण करनेवाला है वह२ उपनिषत् कहाता है । उन में यह उपनिषत् तलवकार शाखा के अन्तर्गत है । सामवेद की एक हजार शाखाओं में से यह एक तलवकार शाखा है । इस शाखा में नव अध्याय हैं प्रथम आठ अध्याय में कर्मकाण्ड का वर्णन है यह नववां अध्याय ज्ञानकाण्डरूप तलवकारीयोपनिषत् कहाता है पर इस समय यह शाखा पूरी२ प्रचरित नहीं किन्तु मिलना दुर्लभसा है । श्री शङ्कराचार्य्यस्वामीजी के समय तक प्रचरित थी ॥

**केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥**

केन । ईषितम् । पतति । प्रेषितम् । मनः । केन । प्राणः । प्रथमः । प्रैति । युक्तः । केन । ईषिताम् । वाचम् । इमाम् । वदन्ति । चक्षुः । श्रोत्रम् । कः । उ । देवः । युनक्ति ॥ १ ॥

अन्वितार्थः—( केन ) कर्त्रा ( प्रेषितम् ) प्रेरितम् ( मनः ) संकल्पविकल्पात्मकम् (ईषितम्)अभीप्सितं विषयम् ( पतति ) प्राप्नोति ( केन ) ( युक्तः ) स्वकर्मणि नियुक्तः (प्रथमः) स्वाधिकरणस्थानेषु विस्तृतः (प्राणः) शिरःस्थमार्गनिस्सरणशीलो वायुः (प्रैति)प्रतिक्षणं स्वव्यापारं करोति। (केन) (ईषिताम्) नियताम् ( इमाम् ) श्रोत्रद्वारेण प्रत्यक्षीभूताम् ( वाचम् ) ( वदन्ति ) जनाइति शेषः । ( उ ) ( कः,देवः ) द्योतनात्मकः (चक्षुः, श्रोत्रम् ) स्वस्वविषये ( युनक्ति ) सर्गकाले सर्वाणीन्द्रियाणि स्वस्वविषयग्राहकाणि केन नियम्यन्ते । अर्थात् चक्षुषा रूपमेव गृह्यते शब्दः कथं नश्रूयत इति नियमः केन कृतोऽस्ति। सर्गारम्भेऽन्यदा च मनश्चक्षुरादीन्द्रियाणां प्रवृत्तेः किं निमित्तं मनश्चक्षुरादीनां जडत्वं सर्वाभिमतं तथासति लोहेचष्टायामयस्कान्तवन्मनश्चक्षुरादिचैतन्यचेष्टायां किं निमित्तमिति प्रष्टुः शिष्यस्याशयः ॥ १ ॥

भा०—( केन ) किसने ( प्रेषितम् ) प्रेरणा किया हुआ ( मनः ) सङ्कल्पविकल्पवृत्तिवाला मन ( ईषितम् ) अभीष्ट विषय को ( पतति ) प्राप्त होता और ( प्रथमः ) अपने स्थान आंख नाक कान मुखादि में फैला हुआ ( प्राणः ) शिरके छिद्रों द्वारा निकलने वाला प्राण ( केन ) किससे ( युक्तः ) अपने कर्म में नियत हुआ ( प्रैति ) सब समय अपना व्यापार करता ( केन ) किससे ( ईषिताम् ) नियत की हुई ( इमाम् ) श्रोत्र से प्रत्यक्ष होने वाली ( वाचम् ) वाणी को मनुष्य ( वदन्ति ) कहते हैं और ( कः, उ ) कौन ( देवः ) सबके अन्तःकरणों में प्रकाश करनेवाला (चक्षुः ) नेत्र और ( श्रोत्रम् ) कान को अपने कार्य में ( युनक्ति ) युक्त करता है अर्थात् संसार के उत्पत्ति समय में सब चक्षु आदि इन्द्रियों को अपने २ विषय के ग्रहण में कौन नियुक्त करता है नेत्र से रूपही दीखता है शब्द क्यों नहीं सुनाजाता यह नियम किसने किया है ? । सृष्टि के आरम्भ में और उसके बाद मन तथा चक्षु आदि इन्द्रियों की प्रवृ-

त्तिका निमित्त क्या है? क्योंकि मन और चक्षु आदिका जड होना सभी मानते हैं तब जैसे जड लोहा चुम्बक के निकट होने से चेष्टा करता है वैसे मन और चक्षु आदि किसकी चेतनता से चेतन से दीखते हैं यह पूछनेवाले शिष्यका अभिप्राय है ॥ १ ॥

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं सउ प्राणस्य प्राणः । चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥**

श्रोत्रस्य । श्रोत्रम् । मनसः । मनः । यत् । वाचः । ह । वाचम् । सः । उ । प्राणस्य । प्राणः । चक्षुषः । चक्षुः । अतिमुच्य । धीराः । प्रेत्य । अस्मात् । लोकात् । अमृताः । भवन्ति ॥ २ ॥

अन्वितार्थः—( यत् ) यस्मात् ( श्रोत्रस्य ) श्रूयते शब्दोऽनेन तस्य शब्दग्राहकस्येन्द्रियस्य ( श्रोत्रम् ) ( मनसः ) सुखदुःखादि ज्ञानसाधनस्यान्तःकरणस्य ( मनः ) (वाचः)वागिन्द्रियस्य (ह ) ( वाचम्) सुब्व्यत्ययेनात्रप्रथमार्थे द्वितीया। तस्यैवानुग्रहेण वागिन्द्रियं प्रवर्त्तते । यथा सूर्यानुग्रहेण चक्षुः पश्यति सूर्यश्च यस्यानुग्रहेण तपति तदेवान्यकारणानामपि कारणम् । ( सः, उ ) सएव ( प्राणस्य ) हृत्स्थस्योर्द्ध्वगामिनो वायोः ( प्राणः ) चालयिता ( चक्षुषः ) चष्टे रूपं पश्यत्यनेन तस्येन्द्रियस्य ( चक्षुः ) दर्शनशक्तिसाधनम् । एवं श्रोत्रादिकृत्यसाधकं यद्ब्रह्म तस्यैव प्रेरणया मनआदीनीन्द्रियाणि स्वं स्वं कर्मातिवाहयन्ति तेन च यद्यत्पृथिव्यादि भूतमुपादाय यद्यद्घ्राणादीन्द्रियं निर्मितं तत्तदिन्द्रियं कार्यकारणसम्बन्धात्तस्यतस्यैव पृथिव्यादिभूतस्य गन्धादिगुणं गृह्णातीति नियमस्तेनैव कृतोऽस्तीत्यपि ध्वनितम् । श्रोत्रादिष्वात्मभावम् (अतिमुच्य) त्यक्त्वा (धीराः) ध्यानशीला धीमन्तो योगिनो मनुष्याः ( अस्मात् ) प्रत्यक्षात् ( लोकात् ) दृश्याद्वस्तुनो देहादिभ्यश्च ( प्रेत्य) मृत्वा (अमृताः) अमरणधर्माणो मुक्ताः ( भवन्ति ) ॥ २ ॥

भावार्थः—श्रोत्रे मनसि वाचि प्राणे चक्षुषि च श्रवणादि-चैतन्यकृत्यं परमात्मकृतमेवास्तीत्यभिप्रायः।यथा च निरिच्छेऽप्य-यस्कान्तउदासीनवत्समीपस्थे लोहः प्रवर्त्तते तथैव श्रोत्रादीनि जडानि सर्वाणि वहिरन्तःकरणानि ब्रह्मचैतन्येन चेतनवत्प्रति-भान्ति तथासति यः श्रोत्रादिभिः श्रवणादिकृत्यं कारयति तद् ब्रह्म। श्रोत्रादिष्वात्मभावना वन्धहेतुः सा हेया तदैवमोक्षसिद्धिः। एकएव चेतनआत्मा न ततो भिन्नः कोऽपि जीवोऽस्ति। आ-त्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः। स्वकीयार्थेषुवर्त्तन्ते सूर्या लोकंयथाजनाः॥ अयमेवाशयोऽत्र दर्शितः॥

भाषार्थः—( यत् ) जिससे कि ( श्रोत्रस्य ) सुनने के साधन शब्दग्राहक श्रोत्र इन्द्रिय का ( श्रोत्रम् ) श्रोत्र ( मनसः ) दुःखादि ज्ञान के साधन अन्तःकरण का ( मनः ) मन (वाचः)वाणीका ( वा-चम् ) वाणी है अर्थात् उसी की कृपा से वाणी अपने काम में प्रवृ-त्त होती है (सः, उ ) वही परमेश्वर ( प्राणस्य ) हृदय से ऊपरको निकलने वाले प्राण वायुका(प्राणः)चलाने वाला ( चक्षुषः ) रूप दे-खने के साधन चक्षु इन्द्रिय का ( चक्षुः ) दिखाने वाला है इस प्र-कार इन्द्रियों को सिद्ध करने वाला जो ब्रह्म उसीकी प्रेरणा से म-नआदि इन्द्रिय अपने२ कर्म करने में समर्थ होते हैं। उस ईश्वर ने जि-स२ पृथिव्यादि तत्त्वसे जो२ नासिकादि इन्द्रिय वनायाहै वह२ इन्द्रिय कार्य कारण संवंध से उसी २ पृथिवी आदि तत्त्वके गन्धआदिगुण को ग्रहण करता यह नियम उसी सर्वनियन्ताने कियाहै यह भी मं-त्रसे ध्वनित होता है। श्रोत्रादि में आत्मभावनाको ( अतिमुच्य ) छोडके ( धीराः ) असङ्ग ईश्वरका ध्यान करने वाले योगीजन वा-सनादि अन्तःकरणके वन्धन से पृथक् होनेके कारण(अस्मात् )इस (लोकात्) प्रत्यक्ष धनादि वा देहादिसे (प्रेत्य) मर कर ( अमृताः ) मरण धर्मरहित मुक्त ( भवन्ति ) हो जाते हैं॥ २॥

भा०—श्रोत्र मन वाणी प्राण और चक्षु में सुनना आदि चेतन का काम परमात्मा का ही किया है क्योंकि श्रोत्रादि स्वयं जड हैं। जैसे चुम्बक नहीं चाहता कि मेरे समीप होनेसे लोहे में क्रिया हो तो भी चुम्बक के समीप होने पर लोहे में क्रिया होती है वैसे ही श्रोत्रादि वहिःकरण और मनआदि अन्तःकरण स्वयं जड हैं पर चे-तन ब्रह्म की सत्ता से चेतन से प्रतीत होते हैं। ऐसा होने पर जो

श्रोत्रादि से सुनना आदि कराता है वही परमेश्वर है श्रोत्रादि को आत्मा मानना बन्धनका हेतु है उसके त्याग से मोक्षकी सिद्धि होती है। चेतन आत्मा एक ही है उस से भिन्न कोई जीव नहीं है किन्तु उसका अंशरूप ही जीव है। आत्मबोध में कहा है कि "एक आत्मा की चेतनताको लेकर शरीर इन्द्रियां मन और बुद्धि अपने२ चेतनताके कामोंको करती हैं कि जैसे सूर्य के प्रकाश की सहायता को लेकर सब लोग आखों से देखते हैं,, यही अभिप्राय यहां इस मन्त्र में कहा जानो॥

## न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथै-तदनु शिष्यादन्यदेव तद्विदितादथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे॥ ३॥

न। तत्र। चक्षुः। गच्छति। न। वाक्। गच्छति। नो। मनः। न। विद्मः। न। विजानीमः। यथा। एतत्। अनुशिष्यात्। अन्यत्। एव। तत्। विदितात्। अथो। अविदितात्। अधि। इति। शुश्रुम। पूर्वेषाम्। ये। नः। तत्। व्याचचक्षिरे॥ ३॥

अ०—यतः श्रोत्रादेरपि श्रोत्रादिरूपं ब्रह्मातः (तत्र) ब्रह्मणि (चक्षुः) रूपग्रहणाय (न, गच्छति) स्वात्मनि गमनासम्भवात् (नो, मनः) नच मनस्तत्र गच्छति चक्षुरादीनामपि चक्षुरादित्वे यथाग्निरन्यद्वस्त्वन्तरं दहति प्रकाशयति च नतु स्वात्मानमेवमत्रापि। एवमन्यान्यपीन्द्रियाणि तत्र गन्तुमसमर्थानि चक्षुरादीनामुपलक्षणार्थत्वात्। अतएव वयम् (न, विद्मः) इन्द्रियमनोभ्यामेव वस्तु ज्ञातुं शक्यते (न, विजानीमः) विशेषतयापि ज्ञातुं न शक्नुमः। अवयवविभागमन्तरेणाकृतिमात्रज्ञानं सामान्यज्ञानं, अवयवविभागज्ञानपूर्वकं विशेषज्ञानं विज्ञानम् तस्य स्वतोऽभिन्नत्वादुभयथापि न जानीम इत्यर्थः। (यथा) ये-

न प्रकारेण ( अनुशिष्यात् ) शिष्यायायोपदिशेत् । यथा ज्ञातं वस्तूपदेष्टुं शक्यते न तथास्वरूपाभिन्नत्वेन विज्ञानाभावात्तस्यानुशासनं कर्त्तुं शक्यम् । ( तत् ) ब्रह्म ( विदितात्) इन्द्रियज्ञातविषयात् ( अन्यत्,एव ) पृथगेवास्ति, तर्हि न केनापिज्ञातुं शक्यमिति प्राप्तम् । अत आह ( अथो ) अनन्तरम् ( अविदितात्)विदिक्रियाया अविषयीभूतादव्याकृतादव्यक्तात् ( अधि) उपरि वर्त्ततेऽन्यदस्तीत्यर्थः । अथवाऽविदितमव्याकृतं जगत्कारणं मायारूपमतिसूक्ष्मं तस्मादन्यत् । विदितादन्यादित्युक्त्या हेयशून्यम् । इन्द्रियगोचरा नश्वरा विषया हेयास्तद्विलक्षणं ब्रह्मातएवाहेयम् । सर्वत्र व्याप्तत्वाद्धानं कर्त्तुमशक्यम् । अविदितादधीति कथनादनुपादेयत्वं ब्रह्मणः सूचितम् । एवं विदिताविदिताभ्यां विलक्षणं ब्रह्म ( इति ) एवम् ( पूर्वेषाम् ) पूर्वाचार्याणां वचो वयम् ( शुश्रुम ) श्रुतवन्तः ( ये ) आचार्य्याः (नः) अस्मभ्यम् ( तत् ) ब्रह्म ( व्याचचक्षिरे ) व्याख्यातवन्तः । इदमुक्तं भवति—ब्रह्मस्वरूपनिरूपकेण ब्रह्म पृष्टेन गुरुणा शिष्या उपदेष्टव्यास्तद्ब्रह्म भौतिकेन्द्रियैर्ज्ञातुमशक्यं तदविषयीभूतत्वात् । किन्तु अन्तःकरणशुद्ध्या सूक्ष्मबुद्धिग्राह्यं महता कालेन श्रमेण वा केनचित्कदाचिदेव प्राप्यं नतु सर्वदा सर्वेणेति गुरुशिष्यपरम्परातः पूर्वेषामाचार्याणां वचांस्यश्रौषमहामिति ज्ञातुरन्यत्कल्पितमसद्दृश्यं विदितमव्याकृतं प्रधानमविदितं ताभ्यामन्यज्ज्ञातुः स्वरूपमेवावशिष्टमयमात्माब्रह्मेत्यादिप्रमाणगम्यं ब्रह्मास्तीत्यभिप्रायः ॥ ३ ॥

भाषार्थः—जिससे श्रोत्रादिक का भी श्रोत्रादिरूप ब्रह्म है इसी से ( तत्र ) उस ब्रह्म में रूप ग्रहण करने के तुल्य ( चक्षुः ) नेत्र ( न, गच्छति ) नहीं जाता ( वाक् ) वाणी जैसे कान में जाती वैसे ( न, गच्छति ) नहीं जाती (नो, मनः) मन भी उस ब्रह्म में नहीं पहुंचता [ तथा चक्षु आदि के उपलक्षण से अन्य इन्द्रिय भी उस को प्राप्त नहीं होसकते ] इसी कारण हम लोग ( न, विद्मः ) उस को नहीं जानते मन और इन्द्रियके संयोगसे वस्तु जाना जाता है

सो मनकी गति का प्रथम ही निषेध करदिया। ( न, विजानीमः ) विशेष करके भी हम नहीं जान सकते। अवयव ज्ञानके विना आकृतिमात्र का ज्ञान सामान्य ज्ञान है और अवयवों के विभाग-ज्ञान -पूर्वक उस वस्तु को जानना विशेष ज्ञान है। जैसे दूर से देख कर जान लिया कि कोई पशु है और जब समीप से देखा तो जाना कि यह अमुक पशु है इस में पहिला सामान्य और दूसरा विशेष ज्ञान है सो उस ईश्वर के सरूप से अभिन्न होने से हम सामान्य विशेष दोनों प्रकार नहीं जान सकते कि ( यथा ) जैसे (एतत् ) इस उक्त ब्रह्मस्वरूप का पुत्र वा शिष्य के अर्थ ( अनुशिष्यात् ) उपदेश करे, यथावत् जाने हुए वस्तु का उपदेश करना बन सकना है कि अमुक पदार्थ का स्वरूप ऐसा है ईश्वर में स्वरूप से अभिन्न होने के कारण इन्द्रियों की पहुंच नहीं हो सकती तो उस के स्वरूपका उपदेश कैसे किया जा सकता है। ( तत् ) वह ब्रह्म ( विदितात् ) इन्द्रिय से जाने हुए विषय से ( अन्यत्, एव ) भिन्न ही है ( अथो ) और ( अविदितात् ) जो कभी नहीं जाना जाता उस अव्याकृत[अर्थात् जिसका व्याकरण नहीं हो सकता कि ऐसा ऐसा है ] अव्यक्त प्रकृति से ( अधि ) ऊपर अर्थात् भिन्न है अथवा प्रकृति अव्याकृत जो जगत् का कारण मायारूप सूक्ष्म है उस से भी भिन्न है। विदित से भिन्न कहने से यह तात्पर्य है कि ईश्वर त्याज्य नहीं। क्योंकि इन्द्रियग्राह्य नाशवान द्रव्य सभी विषय असत् नाम मिथ्या होने से त्याज्य होते हैं ईश्वर उस से विलक्षण है इससे त्याज्य नहीं, सर्वव्यापक होने से ईश्वर से पृथक् कोई कभी नहीं होसकता न उस को छोड सकता है। अविदित से अन्य कहने द्वारा ब्रह्म ग्रहण करने पकडने योग्य नहीं यह सूचित किया है इस प्रकार ज्ञात अज्ञात से विलक्षण ईश्वर है( इति )इस प्रकार ( पूर्वेषाम्) पूर्वज आचार्य्यों के वचन हमने ( शुश्रुम ) सुने हैं ( ये ) जो आचार्य गुरु लोग ( नः ) हमारे लिये ( तत् ) उस शुद्ध सनातन ब्रह्मका (व्याचचक्षिरे ) उपदेश करते आये हैं॥

अभिप्राय यह है कि जब ब्रह्मनिष्ठ गुरु से कोई शिष्य पूछे तो गुरु को उपदेश करना चाहिये कि वह ब्रह्म भौतिक इन्द्रियों से जानने योग्य नहीं क्योंकि वह इन्द्रियों के रूपादि विषय में नहीं किन्तु अन्तःकरण की शुद्धि से सूक्ष्म बुद्धि करके ग्रहण करने योग्य है। बहुत काल में बडे परिश्रम से कभी कोई उसको प्राप्त हो सकता है किन्तु सब काल में सब कोई प्राप्त नहीं होसकता इस प्रकार गुरु शिष्य की परम्परा से पूर्वज आचार्यों के वचन हमने

सुने हैं। सारांश यह निकला कि जानने वाले से पृथक् कल्पित असत् घटपटादि सब विदित कहाते और अतिसूक्ष्म प्रकृति माया अविदित है इन दोनों से भिन्न ज्ञाता का स्वरूप ही शेष रहता है इस कारण "यह शरीरस्थ आत्माही ब्रह्म है,, इत्यादि प्रमाणोंसे प्रतीत होनेवाला ज्ञाता स्वरूप ही ब्रह्म है ॥ ३ ॥

**यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥४॥**

यत्। वाचा। अनभ्युदितम्। येन। वाक्। अभ्युद्यते। तत्। एव। ब्रह्म। त्वम्। विद्धि। न। इदम्। यत्। इदम्। उपासते ॥ ४ ॥

अन्वितोर्थः—( यत् ) आत्मतत्त्वम् ( वाचा ) पदरूपेण परिच्छिन्नया करणगुणवत्या वाचा वागिन्द्रियेण (अनभ्युदितम्) अप्रकाशितम्, वाचा शब्दः प्रकटी भवति, अशब्दं ब्रह्मातो वाग्विषयो न भवतीत्यर्थः ( येन ) चैतन्यज्योतिषा ब्रह्मणा (वाक्) ( अभ्युद्यते) प्रकाशिता प्रयुक्ता भवति [ अर्थाद्ब्रह्मकृतनियमेनैव वाचोच्चारितः शब्दोर्थं बोधयति।यद्यपि वेदादिशब्दप्रमाणमाश्रित्यैवमादिप्रकारकं ब्रह्मेत्याचार्य्या वाचैव शिष्यानुपदिशन्ति तेन च यथासंस्कारमन्तेवासिनोऽपि ब्रह्म बुध्यन्ते तथापि साऽऽचार्य्याणां वाक् शब्दार्थसम्बन्धज्ञापनायैव प्रयुक्ता ब्रह्मज्ञानं प्रति कारणं न भवति। किन्तूच्चारिताया वाचः श्रवणं प्रति कारणत्वं स्वसाधनसिद्धस्य ध्यानस्य च ब्रह्मज्ञानं प्रति साक्षात्कारणत्वम् ] ( तत्, एव, त्वम् ) वाचोहवाचामित्यादिनोपदिष्टम् ( ब्रह्म ) ( विद्धि ) जानीहि। मनुष्याः ( यदिदम् ) कार्यं वागिन्द्रियगम्यं शब्दादिरूपम् ( उपासते) सेवन्ते तत् (इदम्) (न)ब्रह्म नास्तीति शेषः। वदन्वाक्,वाचमन्तरो यमयति यद्वाचो ह वाचमित्यादिश्रुतिभ्यस्तस्य वाक्स्वरूपत्वं सिद्धं ततथासति यथाग्निरन्यानेव प्रकाश्यान् प्रकाशयति नतु स्वात्मानं तथैव वागात्मकं ब्रह्म वाचा न प्रकाश्यतेऽपितु वाक् तेन प्रकाशिता भवति तस्माद्वाक्स्फोटनहेतुं स्वात्मानमेव ब्रह्म जानीहीत्यभिप्रायः ॥ ४ ॥

भावार्थः—( यत् ) जो आत्मतत्त्व ( वाचा ) पदस्वरूप से परिच्छिन्न करण गुणवाली वाणी से ( अनभ्युदितम् ) नहीं कहाजाता वा प्रकाशित नहीं होता। वाणी से शब्द प्रकट होता है शब्द से भिन्न होने से ब्रह्म वाणी का विषय नहीं होता ( येन ) जिस चैतन्य ज्योतिस्वरूप ब्रह्म से ( वाक् ) वाणी ( अभ्युद्यते ) प्रकाशित वा प्रयुक्त होती है अर्थात् ईश्वर कृत नियमसे ही वाणी करके उच्चारित शब्द अर्थका बोध कराता है। यद्यपि वेदादि शास्त्रके प्रमाण के आश्रय से ही ब्रह्म ऐसा २ है इत्यादि प्रकार आचार्य लोग वाणी से ही शिष्यों को उपदेश करते हैं उससे बुद्धि के अनुसार शिष्य लोग ब्रह्म को जानते हैं तो भी गुरु लोगों की वह वाणी शब्द और अर्थ का सम्बन्ध जनाने के लिये जैसे कारण होती वैसे ब्रह्मज्ञान के लिये नहीं किन्तु उच्चारण की हुई वाणी सुनने में कारण होती और अपने साधनों सहित ध्यान ब्रह्मज्ञानका साक्षात् कारण होता है (तत्,एव) उसी वाणी का वाणी इत्यादि प्रकार से कहे हुए को ( त्वम् ) तू ( ब्रह्म) ब्रह्म ( विद्धि ) जान और मनुष्य लोग ( यदिदम् ) जिस वाणी से प्राप्त होने योग्य शब्दादिरूप कार्य को ( उपासते ) सेवन करते हैं ( तदिदम् ) वह यह ( न ) ब्रह्म नहीं है। यह बोलता हुआ वाणी कहाता, जो वाणीके भीतर रहता हुआ वाणी को नियम बद्ध करता, जो वाणी का भी वाणी है इत्यादि श्रुतियों से उसका वाणी स्वरूप होना सिद्ध है। जैसा होने पर जैसे अग्नि अन्यों को प्रकाशित करता है स्वयं प्रकाशस्वरूप होने से अपने स्वरूप को प्रकाशित करनेकी आवश्यकता उसे नहीं है वैसे ही वाणी स्वरूप ब्रह्म वाणीसे प्रकाशित नहीं होता किन्तु वाणी उससे प्रकाशित होती है इससे वाणीको प्रकट करनेके हेतु अपने अन्तरात्मस्वरूप कोही ब्रह्म जानो किन्तु देह इन्द्रिय विषय और अन्तःकरणादि ब्रह्म नहीं हैं ॥ ४ ॥

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥५॥**

यत् । मनसा । न । मनुते । येन । आहुः । मनः । मतम् । तत् । एव । ब्रह्म । त्वम् । विद्धि । न । इदम् । यत् । इदम् । उपासते ॥५॥

अन्वयः—( यत् ) ब्रह्म ( मनसा ) मनुतेऽनेनेति मनोऽन्तःकरणं ज्ञातुः सुखदुःखादिजन्यस्य ज्ञानस्य साधनं तेन (न, मनुते ) न सङ्कल्पयति न निश्चिनोति किन्त्वकार्यत्वादन्तः

करणमन्तरेणैव ब्रह्म सर्वं वेत्ति ( येन ) ब्रह्मणा ( मनः ) अन्तःकरणम् ( मतम् ) ज्ञातं विषयीकृतं व्यापकत्वात्प्राप्तं व्याप्तं वा ( आहुः ) वदन्ति ब्रह्मविद इति शेषः ( तत्, एव ) मनसो मनइत्यादिना प्रतिपादितम् ( त्वम् ) जिज्ञासो ! ( ब्रह्म ) ( विद्धि जानीहि ( यदिदम् ) मनोगम्यं सुखादिकम् ( उपासते ) जनाः सेवन्ते तदिदं ब्रह्म ( न ) नास्ति । मन्वानो मनो भवतीत्यादिश्रुतिभ्यः सिद्धं मनसोऽपि मनोरूपं ब्रह्म तस्मादेव मनसा नैव प्रकाश्यते मनसि च मनस्त्वं तदीयमेवेति मनस्तेन विषयीकृतं भवति तस्मादत्रापि मनोऽवभासकं स्वात्मरूपमेव ब्रह्मेत्यभिप्रायः ॥ ५ ॥

भाषार्थः—( यत् ) जो ब्रह्म ( मनसा ) जीव के सुख दुःखादि से होने वाले ज्ञान के साधन अन्तःकरण से ( न, मनुते ) निश्चय नहीं करता किन्तु कर्मचित शरीर रहित होनेसे अन्तःकरणके विनाही ईश्वर सब को जानता है ( येन ) जिस ईश्वर से ( मनः ) अन्तःकरण ( मतम् ) जाना गया [ विषय किया गया ] व्यापक होने से जो अन्तःकरण में मिल रहा है ऐसा ( आहुः ) ब्रह्मवेत्ता महर्षि लोग कहते हैं ( तदेव )उसी मन के मन आदि विशेषणों से कहे को ( त्वम् ) हे जिज्ञासु ! तू ( ब्रह्म ) ब्रह्म ( विद्धि ) जान ( यदिदम् ) जो यह मनसे जानने योग्य सुखादि है जिसको ( उपासते ) सर्वसाधारण लोग सेवन करते हैं ( इदम् ) वह यह ब्रह्म ( न ) नहीं है वही शरीरस्थ ब्रह्म मनन करता हुआ मन कहाता है इत्यादि श्रुतियों से सिद्ध है कि वह मन का भी मन है । इसी कारण वह मन से प्रकाशित नहीं होता और मन में मनन शक्तिरूप वही है इस से मनको वह जानता है तिससे सिद्ध हुआ कि इस मन्त्र में भी मनको चेतन करने वाला अपना अन्तरात्मा ही ब्रह्मस्वरूप है । इस कथन से जीव ब्रह्म का भेद न होना सिद्ध है ॥ ५ ॥

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥६॥**

यत् । चक्षुषा । न । पश्यति । येन । चक्षूंषि । पश्यति । तत् । एव । ब्रह्म । त्वम् । विद्धि । न । इदम् । यत् । इदम् । उपासते ॥ ६ ॥

अन्वयः—( यत् ) ब्रह्म ( चक्षुषा ) रूपज्ञानसाधनेन्द्रियेण ( न, पश्यति ) ( येन ) ब्रह्मणा ( चक्षूंषि ) बुद्धिवृत्तीरन्तःकरणभेदभिन्नाः ( पश्यति ) सर्वः प्राणी ( तत्,एव ) चक्षुषश्चक्षुरित्यादिना प्रतिपादितम् ( त्वम् ) ( ब्रह्म, विद्धि ) ( यदिदम् ) चक्षुर्ग्राह्यं रूपान्वितं वस्तुजातं जनाः ( उपासते ) सेवन्ते तत् ( इदम् ) ( न ) ब्रह्म नास्तीति जानीहि पश्यंश्चक्षुर्भवति,चक्षुषश्चक्षुरित्यादिश्रुतिभ्यश्चक्षुषो दर्शकं चक्षुषि चक्षूरूपं चक्षूरूपत्वाच्चक्षुषा न पश्यत्यपितु स्वयमेव सर्वं दर्शयति तदेव स्वान्तरात्म स्वरूपमद्वैतं ब्रह्मेत्याशयः ॥ ६ ॥

भा०—यत् । जो ब्रह्म ( चक्षुषा ) रूपज्ञान के साधन इन्द्रिय से ( न, पश्यति ) नहीं देखता ( येन ) जिस ब्रह्म की कृपा वा सत्तासे ( चक्षूंषि ) अन्तःकरण [ दिल ] की वृत्तियों [ लहरों ] को ( पश्यति) प्राणी देखता है (त्वम्) तू (तदेव )उसी चक्षुके चक्षुको ( ब्रह्म ) ब्रह्म ( विद्धि ) जान ( यदिदम् ) जिस इस नेत्रसे देखने योग्य वस्तु का मनुष्य ( उपासते ) सेवन करते हैं वह ( इदम् ) यह ब्रह्म (न) नहीं है वह देखता हुआ चक्षु होता, यह चक्षु का भी चक्षु है इत्यादि श्रुतियों के प्रमाण से चक्षु को दिखाने वाला चक्षु में चक्षु रूप होने से ही वह चक्षु से नहीं देखता किन्तु स्वयमेव सब को दिखाता है वही अपना अन्तरात्मस्वरूप अद्वैत ब्रह्म है ॥ ६ ॥

## यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥

यत् । श्रोत्रेण । न । शृणोति । येन । श्रोत्रम् । इदम् । श्रुतम् । तत् । एव । ब्रह्म । त्वम् । विद्धि । न । इदम् । यत् । इदम् । उपासते ॥ ७ ॥

अन्वयः—( यत् ) ब्रह्म ( श्रोत्रेण ) श्रवणसाधनेन ( न, शृणोति ) ( येन ) चैतन्यात्मज्योतिषा ब्रह्मणा ( इदम् ) श्रोत्रं कर्णेन्द्रियम् ( श्रुतम् ) विषयीकृतमाक्रान्तमाच्छन्नं ज्ञातम्, श्रोत्रमपि ब्रह्मसत्तामन्तरेण स्वकार्यं दातुमसमर्थमित्यर्थः । ( तदेवेत्यादि ) पूर्ववत् ॥ ७ ॥

भा—( यत् ) जो ब्रह्म ( श्रोत्रेण ) सुनने के साधन कान इन्द्रिय से ( न, शृणोति ) नहीं सुनता ( येन ) जिस चैतन्यज्योतिःस्वरूप ब्रह्म से ( इदम् ) यह ( श्रोत्रम् ) कान इन्द्रिय ( श्रुतम् ) ब्रह्म के व्यापक होने से प्राप्त किया गया वा दबाया वा जाना गया अर्थात् कान भी जिस ईश्वर की सत्ता वा उस के निर्मित नियमों के विना अपना काम नहीं देसकता। हे मनुष्य! ( त्वम् ) तू ( तदेव ) उसी को ( ब्रह्म ) ब्रह्म ( विद्धि ) जान ( यदिदम् ) जिस इस श्रोत्र इन्द्रिय के शब्द आदि विषय का मनुष्य ( उपासते ) सेवन करते हैं ( इदं, न ) यह ब्रह्म नहीं है ॥ ७ ॥

**यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥**

यत्। प्राणेन। न। प्राणिति। येन। प्राणः। प्रणीयते। तत्। एव। ब्रह्म। त्वम्। विद्धि। न। इदम्। यत्। इदम्। उपासते ॥ ८ ॥

अ०( यत् ) ब्रह्म। ( प्राणेन ) श्वासावृत्त्या ( न, प्राणिति ) पार्थिवनासिकापुटाभ्यां न श्वसिति ( येन ) कारणभूतेन चैतन्यात्मज्योतिषा ब्रह्मणा ( प्राणः ) ( प्रणीयते ) स्वविषयं प्रति प्रेर्यते ( तदेव ) ( त्वम् ) जीवात्मन्! ( ब्रह्म ) ( विद्धि ) जानीहि ( यदिदम् ) जनाः ( उपासते ) तत् ( इदम् ) न ब्रह्म नास्तीति ॥ ८ ॥

भावार्थः—( यत् ) जो ब्रह्म ( प्राणेन ) श्वासके आने जाने द्वारा ( न,प्राणिति ) पृथ्वीसे बने नासिका के पुटों से श्वास नहीं लेता ( येन ) जिस कारणरूप चैतन्यज्योति ब्रह्म से ( प्राणः ) प्राण ( प्रणीयते ) अपने विषयके प्रति प्रेरित होता। हे जीवात्मन्! ( त्वम् )तू ( तदेव ) उसीको ( ब्रह्म ) ब्रह्म ( विद्धि )जान ( यदिदम् ) जिस जीवन मरणान्तर्गत प्राण वायुका मनुष्य ( उपासते ) सेवन करते हैं ( इदम्, न ) यह ब्रह्म नहीं है ॥ ८॥

इत्येवमस्मिन् प्रथमे खण्डे मनश्चक्षुरादीन्द्रियप्रवृत्तिनिमित्तं सर्वेन्द्रियावभासकं यद् ब्रह्म तस्य च मनश्चक्षुरादेरपि मनश्चक्षुरादित्वात्संनिहितस्यापि विषयापेतस्य ब्रह्मणोऽकृतात्मभिर्दुर्ज्ञेयत्वं प्र-

तिपादितम् । वाङ्मनश्चक्षुःश्रोत्रप्राणानां प्राधान्यादुपलक्षणार्थं ग्रहणम् । तत्र कर्मेन्द्रियेषु वाचः प्राधान्यम् । ज्ञानेन्द्रियेषु चक्षुषः श्रोत्रस्य च, मन उभयात्मकम् । वायुभेदेषु प्राणस्य प्राधान्यम् । यत्कर्त्तुं प्रधानस्य सामर्थ्यं नास्ति तत्राप्रधास्य का कथेति ध्वनितम् ॥ इति प्रथमः खण्डः ॥

इस प्रकार इस प्रथम खण्ड में मन और चक्षु आदि इन्द्रियोंकी प्रवृत्ति का निमित्त सब इन्द्रियों को चेतन करनेवाला जो ब्रह्म वह मन आंख आदिका भी मन आंख आदि होने से सब के अति समीप होने पर भी विषयों से पृथक् ब्रह्म का ज्ञान साधारण मनुष्य को दुर्लभ कहा है । वाणी मन चक्षुः श्रोत्र और प्राण इन का मुख्य होने से उपलक्षणार्थ ग्रहण है । कर्मेन्द्रियों में वाणी प्रधान ज्ञानेन्द्रियों में चक्षु और श्रोत्र प्रधान मन दोनों रूप और वायु के भेदों में प्राण प्रधान है । जिस को प्रधान नहीं कर सकता उस में अप्रधान की क्या कथा है ? ॥

इति प्रथमः खण्डः ॥

अस्यामुपनिषदि गुरुशिष्यसंवादेन ब्रह्म स्वरूपनिरूपणं पूर्वतः प्रारब्धम् । तत्र प्रथममन्त्रे जिज्ञासुना प्रश्नः कृतस्तस्योत्तरं गुरुणाष्टमन्त्रैः प्रतिपाद्येदानीं तेनैवोच्यते ॥

इस उपनिषद् में गुरु शिष्य के संवाद पूर्वक ब्रह्म के स्वरूप का निरूपण करना पहिले से आरम्भ किया है । इस में पहिले मन्त्र से जिज्ञासु ने प्रश्न किया है उस का उत्तर गुरु ने आठ मन्त्रों करके दिया । अब प्रकारान्तरसे समझानेके लिये गुरु पुनः उपदेश करते हैं ॥

**यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् । यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते, मन्ये विदितम् ॥ ९ ॥ १ ॥**

यदि । मन्यसे । सुवेद । इति । दभ्रम् । एव । अपि । नूनम् । त्वम् । वेत्थ । ब्रह्मणः । रूपम् । यत् । अस्य । त्वम् । यत् । अस्य । देवेषु । अथ । नु । मीमांस्यम् । एव । ते । मन्ये । विदितम् ॥ ९ ॥ १ ॥

अन्वयः—हेशिष्य ! ( यदि ) ( त्वम् ) ( अस्य ) ( ब्रह्मणः ) ( यत् ) ( दभ्रम् ) सूक्ष्मम् ( एवापि ) ( रूपम् ) अध्यात्मोपाधिपरिच्छिन्नं स्वरूपम् । रूपमिति नेन्द्रियग्राह्यमत्र कल्पनीयमपितु येन धर्मेण यन्निरूप्यते तदेव तस्य रूपमिति विज्ञेयम् । ( नूनम् ) निश्चयेन तत् ( सुवेद ) सुष्ठु वेदाहम् ( इति ) ( मन्यसे ) ( यदस्य, देवेषु ) यदस्य ब्रह्मणोऽधिदैवतोपाधिपरिच्छिन्नं रूपं तत्सुवेदेति मन्यसे च तर्हि ( त्वम् ) तत् ( वेत्थ ) जानासि इति नाहं मन्ये इति शेषः ( अथ, नु ) अनन्तरं नु ( ते ) तव ब्रह्म ( मीमांस्यमेव ) उपपत्तिभिर्विचार्यमेवास्तीत्यहं मन्ये ततः शिष्यो वदति ( मन्ये विदितम् ) वक्ष्यमाणरीत्या विदितं मया ब्रह्मेत्यहं मन्ये ॥ ९ ॥

भा०—सर्वविधकल्पनाहीनं ब्रह्मेति वेदान्तानां सिद्धान्तः। तत्राहं सुवेद सम्यग्जानामीत्यादिकल्पनापि ब्रह्मणि न सम्भवति यद्द्वयमपि कल्पना हानिकराऽतो ब्रह्मैवास्ति नान्यदस्तीति विचाराभ्यासी ब्रह्मज्ञः सम्भवति ॥

भाषार्थः—हे शिष्य ! ( यदि ) जो ( त्वम् ) तू ( अस्य ) इस ( ब्रह्मणः ) ब्रह्मका (यत्) जो ( दभ्रम् ) सूक्ष्म ( एव ) ही ( रूपम् ) अध्यात्मोपाधि से परिच्छिन्न स्वरूप है [ चक्षु इन्द्रिय से जिसका ग्रहण हो वही रूप शब्द का अर्थ लेना चाहिये यह नियम नहीं है किन्तु जिस २ गुण कर्म स्वभाव से जिस वस्तु का निरूपण किया जाता है वह भी उस का रूप जानना चाहिये ] ( नूनम् ) निश्चय करके उस को मैं ( सुवेद ) अच्छे प्रकार जानता हूं ( इति ) ऐसा तू ( मन्यसे ) मानता है वा ( यदस्य देवेषु ) इस ब्रह्म का जो आधिदैविकोपाधिपरिच्छिन्न रूप है उस को भी मैं सम्यक् जानता हूं ऐसा मानता है तो ( त्वम् ) तू उस को ( वेत्थ ) जानता है ऐसा मैं [ आचार्य ] नहीं मानता ( अथ ) इस के अनन्तर ( नु ) निश्चय करके ( ते ) तुझ को ( मीमांस्यमेव ) युक्तियों से ब्रह्म का विचार करनाही चाहिये इसी को मैं अच्छा मानता हूं। तिस पर शिष्य कहता है कि ( मन्ये विदितम् ) मैं आगे कही रीति से ब्रह्म को जान लिया ऐसा मानता हूं ॥

भा०—वेद वेदान्त का सिद्धान्त यह है कि सब प्रकार की कल्पना से रहित परमात्मा है इसी कारण मैं उस को सम्यक् जानता हूं इत्यादि कल्पना भी ब्रह्म में नहीं बन सकती अथवा ज्ञाता ज्ञान ज्ञेय इत्यादि कल्पना भी हानि कारक है। इससे एक ईश्वर ही है अन्य कुछ नहीं है ऐसे विचार का अभ्यासी, जिसे संसार के सब नाम रूपों में सत् चित् आनन्दात्मक ब्रह्म दीखने लगे वही ब्रह्मज्ञानी होसकता है ॥ ९॥

नाहं मन्ये सुवेदेति नो न वेदेति वेद च। यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ १० ॥ २ ॥

न। अहम्। मन्ये। सुवेद। इति। नो। न। वेद। इति। वेद। च। यः। नः। तत्। वेद। तत्। वेद। नो। न। वेद। इति। वेद। च ॥१०॥२॥

अन्वितार्थः—( अहम् ) ब्रह्म ( सुवेद ) अस्मदादिज्ञानविषयं ब्रह्म भवति ( इति ) ( न, मन्ये ) एवं चेन् मन्ये विदितमिति यदुक्तं तन्न संगच्छते ( न वेद ) इति च ( नो) न मन्ये ( वेद, च ) जानाम्यपि ( नः )अस्माकं विद्यार्थिनां मध्ये (यः) कश्चित्सतीर्थ्यः ( तत् ) मदुक्तं वचः( वेद ) जानाति सः ( तत् ) ब्रह्म ( वेद ) जानाति किन्तन्मदुक्तं वच इत्याह—नोनवेदेति वेदचेति। अहम्ब्रह्म सुवेद इति न मन्ये इति कथनेन पूर्वमन्त्रोक्ता शङ्का निराकृता। य एवं साहङ्कारं ब्रूयादहं सुवेदेति न स जानाति। अहङ्कारस्यास्मितावेलशान्तर्गतत्वाज्ज्ञानस्य चेदं गुह्यं लक्षणं यदङ्कारविरहं स्वरूपावस्थानम्। तर्हि त्वं न वेत्थेति प्राप्तम्। तत आह—नवेदेत्यपि नो मन्ये। अपितु वेद। विदित्वापि सुवेद न वेद वा इति नो मन्ये। य एवं जानाति स ब्रह्म वेद। सुवेद न वेद इत्येतयोर्निर्वचनं कर्तुमशक्यमनुभवमात्रग्राह्यत्वात्। ब्रह्म किमित्याशङ्कानिरासान्न वेदेति वक्तुं न शक्यते। प्रत्यक्षमिवाव्यपदेश्यं ब्रह्मेत्याशयः। यथेन्द्रियार्थसन्निकर्षोत्पन्नमात्रस्य व्यपदेष्टुमनर्हस्य ज्ञानस्य प्रत्यक्षत्वमेवं व्यप-

देशानर्हस्यैव ब्रह्मज्ञानत्वम् । अतएव न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मन इत्यादि सङ्गच्छते तृतीयमन्त्रे पूर्वं यदुक्तम्—"अन्यदेवतद्विदितादथोअविदितादधि, तदेवात्र नाहं मन्ये सुवेदेत्यादिना दर्शितम्। यथाचाग्निरन्यानेव दग्धव्यान्प्रकाश्यांश्च दहति प्रकाशयति नतु स्वमेव रूपं तथैव स्वमेव ज्ञातुः स्वरूपं ब्रह्म तत्कथं ज्ञानविषयोऽविषयो वा स्यात् ॥ १० ॥

भाषार्थः—( अहम् ) मैं ब्रह्म को ( सुवेद ) अच्छे प्रकार जानता हूं ( इति ) ऐसा ( न, मन्ये ) नहीं मानता ऐसा कहने से पूर्व नवम मन्त्र के अन्त में जो कहा था कि ( मन्ये विदितम् ) मैं मानता हूं कि जान लिया सो कहना ठीक नहीं होगा इससे कहते हैं कि ( न, वेद ) मैं नहीं जानता ( इति ) ऐसा भी ( नो ) नहीं मानता ( वेद, च ) पर जानता हूं कि ब्रह्म है। ( नः ) हम विद्यार्थियों में से ( यः ) जो कोई ( तत् ) मेरे उक्त वचन को ( वेद ) जानता है। वह ( तत् ) उस ब्रह्म को ( वेद ) जानता है। वह मेरा वचन क्या है ? ( नो न वेदेति वेद च ) जानता हूं पर मैं नहीं जानता ऐसा नहीं मानता, मैं अच्छे प्रकार जानता हूं ऐसा भी नहीं मानता। मैं ब्रह्म को अच्छे प्रकार जानता हूं ऐसा नहीं मानता इस कथन से पूर्व मन्त्रोक्त अहङ्कार की निवृत्ति की है। जो अहङ्कार सहित ऐसा कहे कि मैं अच्छे प्रकार जानता हूं वह नहीं जानता क्योंकि अहङ्कार पांच अविद्यादि क्लेशों में अस्मिता नाम से प्रसिद्ध है और ज्ञान का अनुभव किया हुआ गुप्त लक्षण यही है कि अहङ्कार रहित होकर स्वरूप में अवस्थित होना। यदि ऐसी शङ्का हो कि जब मैं जानता हूं ऐसा विचार रखना उचित नहीं तो तू नहीं जानता होगा इस लिये कहा कि मैं नहीं जानता यह भी नहीं मानता किन्तु जानता भी हूं। जानकर भी अच्छे प्रकार जानता वा नहीं जानता ऐसा नहीं मानता तभी जानता हूं। अर्थात् अच्छा जानता वा नहीं जानता इन दोनों का ठीक कहना नहीं बनता ईश्वर विषयक ज्ञान केवल अनुभव ग्राह्य है ब्रह्मज्ञान के विषयमें शङ्का न रहने से मैं नहीं जानता यह भी नहीं कहसकता। जैसे इन्द्रिय और विषय के संयोग से अकथनीय ज्ञानको प्रत्यक्ष कहते हैं ऐसे ही ब्रह्मज्ञान भी कथन करने योग्य नहीं है इसी लिये उस ब्रह्म में चक्षु वाणी और मन नहीं पहुंचते इत्यादि पूर्वोक्त वचन सार्थक होता है। पूर्व तीसरे

मन्त्र में जो कह चुके हैं कि वह ब्रह्म विदित अविदित दोनों से पृथक् है । वही बात यहां भी कही है कि जैसे अग्नि अपने से भिन्न काष्ठादि को जलाता है किन्तु अपने आप को नहीं जला सकता, वैसे ही जानने वालेके स्वरूप से अभिन्न तदात्मक ब्रह्म अपने आप का विषय वा अविषय नहीं कहा जासकता है ॥ १० ॥

**यस्यामतं तस्य मतं, मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ११ ॥ ३ ॥**

यस्य । अमतम् । तस्य । मतम् । मतम् । यस्य । न । वेद । सः । अविज्ञातम् । विजानताम् । विज्ञातम् । अविजानताम् ॥ ११ ॥ ३ ॥

अ०—सम्प्रति शिष्याचार्यसंवादं समाप्य श्रुतिः स्वातन्त्र्येणोक्तांशस्य तात्पर्यं दर्शयति ( यस्य ) प्रभूततत्त्वज्ञानस्य ब्रह्म ( अमतम् ) अविज्ञातम् [ मनसेति शेषः । चक्षुरादिसाधनासिद्धस्य ज्ञानस्य साधनं मनो रूपादीनां चक्षुरादीनीव । यथा चक्षुषा पश्यति तथा मनसा विजानाति, इति वात्स्यायनोक्तेः ] इति मतं निश्चयः ( तस्य ) ( मतम् ) ज्ञातं तेन सम्यग्बुद्धं ब्रह्मेति ( यस्य ) ममआदिना मया ( मतम् ) ज्ञातं विदितं ब्रह्मेत्याशयः ( सः, न, वेद ) स न तज्जानाति । अतएव ( विजानताम् ) ब्रह्मविज्ञानाभिमानिनाम् ( अविज्ञातम् ) न तैर्ज्ञायते ये च ( अविजानताम् ) तद्विज्ञानाभिमानं त्यक्तवन्तस्तेषाम् ( विज्ञातम् ) तैः सम्यग्ज्ञातमित्यर्थः ॥ ११ ॥

भा०—अब गुरु शिष्य के संवाद को समाप्त कर के श्रुति स्वतंत्रता से उक्त विषय के तात्पर्य को दिखाती है कि ( यस्य ) जिस प्रबल तत्त्वज्ञान को प्राप्त विद्वान् का मत [ सिद्धान्त ] वा निश्चय ऐसा है कि ब्रह्म ( अमतम् ) मन से नहीं जानाजाता ( तस्य ) उस को ब्रह्म का ( मतम् ) ज्ञान है अर्थात् उस ने ब्रह्म को ठीक जान लिया है क्योंकि चक्षु आदि साधनों से सिद्ध न होने वाले ज्ञान का साधन मन, रूपादि विषयज्ञान के साधन चक्षु आदि के

तुल्य है। जैसे चक्षुसे देखता वैसे मन से जानता है और (यस्य) जिसका मत है कि मन आदिसे ब्रह्म (मतम्) जानाजाता है (न, सः, वेद) वह उस को नहीं जानता इसीलिये (विजानताम्) ब्रह्म ज्ञान के अभिमानियों को (अविज्ञातम्) ब्रह्म का ज्ञान ही नहीं होता और जो (अविजानताम्) ब्रह्म ज्ञानके अभिमानको छोड चुके उन को (विज्ञातम्) अच्छे प्रकार ब्रह्म का ज्ञान है। इसका मुख्य अभिप्राय यही है कि जिसको लोग ब्रह्मज्ञानी मानते वा स्वयं जो अपने को ज्ञानी मानता है वह ज्ञानी नहीं। ब्रह्म ज्ञानी को सर्वसाधारण लोग नहीं जान सकते और वह भी सबको नहीं जतासकता कि मैं ऐसा हूं उस को वे ही योगीजन जान सकते हैं (खग ज्ञाने खग ही की भाषा) ब्रह्म ज्ञानी साधारण संसारी मनुष्यों से घृणा करता है। उस की दशा अकथनीय विलक्षण होती है ॥११॥

प्रतिबोधविदितं मतममृतत्वं हि विन्दते। आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम् ॥ १२ ॥ ४ ॥

प्रतिबोधविदितम्। मतम्। अमृतत्वम्। हि। विन्दते। आत्मना। विन्दते। वीर्य्यम्। विद्यया। विन्दते। अमृतम् ॥ १२ ॥ ४ ॥

अन्वितोर्थः—पूर्वं ब्रह्मज्ञानिनो वैलक्षण्यमुक्तं तत्र कथं ब्रह्म ज्ञातुं शक्नोतीति उच्यते—(प्रतिबोधविदितम्) इन्द्रियैर्विषयग्रहणेन तदाकारा बुद्धिर्बोधः। सर्वचराचरवस्तुषु सच्चिदानन्दरूपेण विद्यमानं ब्रह्मैव तत्तन्नामरूपैः प्रतीयते तस्यैव सत्त्वादन्येषां चासत्त्वादेवं प्रत्येकपदार्थबोधेन सह ब्रह्मणएव ज्ञानं कर्त्तव्यं तदेवं प्रतिबोधविदितं ज्ञातं ब्रह्म (मतम्) ज्ञातं भवति। अनेन ज्ञानेन पुरुषः (हि) निश्चितम् (अमृतत्वम्) अमरणधर्मत्वम् (विन्दते) जीवन्मुक्तिं प्राप्नोति। जीवन्मुक्तो भूत्वेत्रोपात्तं देहं परिहाय सुखं विमुच्यते। (आत्मना) स्वस्वरूपेण (वीर्य्यम्) बलं सामर्थ्यम् (विन्दते) लभते आत्मविद्याकृतं वीर्यमात्मनैव विन्दते नान्येन तस्यानन्यसाधनत्वात्तदेव

वीर्यं मृत्युमभिभवति। अतएव (विद्यया) ब्रह्मविषयिकयाऽऽत्मविद्यया ( अमृतम् ) मरणादिदुःखरहितं स्वंस्वरूपं ब्रह्मात्मकम् ( विन्दते ) प्राप्नोति। नायमात्मा बलहीनेन लभ्य इत्युक्तत्वात् ॥ १२ ॥

भाषार्थः—इस से पहिले ब्रह्मज्ञानी की विलक्षणता कही है। सो ब्रह्मको कैसे जान सकता है यह अब कहते हैं (प्रतिबोधविदितम्) इन्द्रियों से विषय का ग्रहण होकर तदाकार अर्थात् रूपादि विषय के स्वरूप को धारण करने वाली बुद्धि "बोध,, कहाती है। सब चराचर वस्तुओं में सत् चित् आनन्द रूपों से विद्यमान ब्रह्म ही उस २ घटपटादि नामरूप से प्रतीत होरहा है। क्योंकि वही एक सत् तथा अन्य सब असत् है इस प्रकार प्रत्येक पदार्थ के बोध के साथ ब्रह्म का ही ज्ञान करना चाहिये यही प्रतिबोध से ब्रह्म का जानना है उस निर्मल शुद्ध ज्ञान से जाना गया ब्रह्म (मतम्) जान लिया मानते हैं इसी प्रकार सिद्ध किये आत्मज्ञान से मुमुक्षु पुरुष ( हि ) निश्चय कर ( अमृतत्वम् ) मृत्युरहित जीवन्मुक्तदशा को (विन्दते) प्राप्त होता अर्थात् जीवन्मुक्त होकर ही वर्त्तमान शरीर को छोड सुखपूर्वक मुक्त होता है (आत्मना) अपने आत्मस्वरूप से (वीर्यम्) बल नाम सामर्थ्य को ( विन्दते ) प्राप्त होता अर्थात् आत्मविद्या से प्रकट हुआ पराक्रम बल अपने आत्मा से ही प्राप्त होता है किन्तु अन्यसे नहीं क्योंकि उस का कोई अन्य साधन नहीं है वही आत्मज्ञान से स्वयमेव प्राप्त हुआ बल मृत्यु को दबा सकता है इसी कारण (विद्यया) ब्रह्म विषयक आत्मविद्या से ( अमृतम् ) जन्म मरणादि में होने वाले दुःखों से रहित अपने ब्रह्मात्मक शुद्ध स्वरूपको ( विन्दते ) प्राप्त होता है क्योंकि ( नायमात्मा० ) इत्यादिक प्रमाण से सिद्ध है कि बलहीन पुरुष उस परमेश्वर को नहीं प्राप्त होसकता इस लिये पूर्वोक्त प्रकार आत्मज्ञान के उपायों से आत्मिक बल और पश्चात् मुक्ति की प्राप्ति करनी चाहिये ॥ १२ ॥

इह चेदवेदीदथ सत्यमस्ति नचेदिहावेदीन्महती विनष्टिः। भूतेषु भूतेषु वि-

चिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भव-
न्ति ॥ १३ ॥ ५ ॥

इह । चेत् । अवेदीत् । अथ । सत्यम् । अस्ति । न । चेत् । इह । अवेदीत् । महती । विनष्टिः । भूतेषु । भूतेषु । विचिन्त्य । धीराः । प्रेत्य । अस्मात् । लोकात् । अमृताः । भवन्ति ॥ १३ ॥

अन्वितोर्थः—( इह ) वर्त्तमाने जन्मनि ( चेत् ) यदि (अवेदीत्) जानीयात् आत्मानमिति शेषः [उपनिषदां वेदत्वात् सार्वकालिकश्छान्दसोऽत्र लुङवेदीदिति ] ( अथ ) तदा ( सत्यम् ) सुफलम् [ मनुष्यजन्म जन्तोः परिश्रमश्च ] ( अस्ति ) ( चेत् ) यदि ( इह ) ( न, अवेदीत् ) न जानीयात् तदा ( महती ) महान् ( विनष्टिः ) सुखस्य विनाशो हिंस्यशरीरादेर्बन्धनच्छेदनाविच्छेदलक्षणो देवमनुष्यतिर्य्यक्प्रेतराक्षसस्थावरादियोनिस्थजन्ममरणयोः संहननरूपो जायते । तस्मादेताः स्थावरान्तासु योनिषु दुःखबहुला प्राणिनां गतीः पश्यन्तो योगिनः (धीराः ) ध्यानवन्तो विद्वांसः ( भूतेषुभूतेषु ) सर्वप्राण्यप्राणिषु चराचरेषु ध्यानयोगेनैकविधमेकमेवात्मतत्त्वम् ( विचिन्त्य ) विशेषचिन्तया तन्निष्ठया निश्चित्यात्मानं साक्षात्कृत्य ( अस्मात् ) ममाहमितिभावलक्षणादविद्यारूपात् प्रत्यक्षादेषणात्रयरूपाद्वा ( लोकात् ) दृश्यात्संसारात् ( प्रेत्य ) परमात्मानमेव ध्यायन्त उपात्तं शरीरादिकं त्यक्त्वा मरणं प्राप्य ( अमृताः ) मुक्ता अविद्यादिजन्यदुःखेभ्यः पृथग्भूताः सर्वात्मैकत्वभावमद्वैतमापन्ना ( भवन्ति ) ॥ १३ ॥

इति द्वितीयः खण्डः ॥

भावार्थः—( इह ) इस वर्त्तमान ही जन्म में (चेत्) यदि आत्मा को ( अवेदीत् ) जान लेवे ( अथ ) तो मनुष्य जन्म और उस का परिश्रम ( सत्यम् ) सुफल ( अस्ति ) है । (चेत्) यदि ( इह ) इस वर्त्तमान जन्म में ( न, अवेदीत् ) न जानले तो (महती ) महान् बडा ( विनष्टिः ) ताडना में आनेवाले शरीर वा इन्द्रियों के बन्धन छेदन का निरन्तर वर्त्तमान रूप, देव, मनुष्य, तिर्यक् प्रेत

राक्षस पिशाचादि पश्वादि और स्थावर-वृक्षादि योनि में जन्म मरण का वार २ होना रूप सुखका विनाश होता है। इसलिये स्थावर पर्यंत योनियों में अनेक दुःखों से पूरित प्राणियों के आवागमन को देखते हुए योगी लोग ( धीराः ) ध्यानशील विद्वान् जन ( भूतेषु-भूतेषु) ध्यानयोगसे सब चराचर जगत् में एक स्वरूपसे व्याप्त एक ही आत्मतत्त्व को ( विचिन्त्य ) विशेष चिन्ता से साक्षात् करके ( अस्मात् ) इस अहंकार ममकारात्मक अविद्या रूप संसार से वा पुत्र धन और प्रतिष्ठा की इच्छा रूप ( लोकात् ) इस प्रत्यक्ष संसार से विरक्त होके ( प्रेत्य ) केवल परमात्मा ही का ध्यान करते हुए ग्रहण किये हुए शरीरादि को छोडिके अर्थात् मरण को प्राप्त होके (अमृताः ) अविद्यादि से होने वाले दुःखों से पृथक् हुए सब एक अद्वैत भावको प्राप्त हुए मुक्त ( भवन्ति ) होते हैं ॥ १३ ॥ यह द्वितीय खण्ड समाप्त हुआ ॥

आद्ये खण्डे ब्रह्मज्ञानाय प्राणादीनामनुपयोगित्वं प्रदर्श्य ब्रह्मज्ञानाय वैलक्षण्यं दुष्प्राप्यत्वं चाभिहितम्। तत्राविज्ञातं विजानतां विज्ञातमविजानतामित्यादिकं श्रुत्वा कोऽपि वदेत्—यदस्ति तत्प्रमाणैर्विज्ञायतएव यच्च वन्ध्यापुत्रादिवदसदेव तच्च न केनापि ज्ञातुं शक्यते यदि च ब्रह्म न ज्ञायते तदाऽविज्ञातत्वादसदेव ब्रह्मेति मन्दमतिजनानां भ्रमस्य वारणायाऽऽख्यायिकया ब्रह्मसत्ता प्रदर्श्यते यद्वा ब्रह्मज्ञानादेवाग्न्यादीनां श्रेष्ठत्वप्रदर्शनेन ब्रह्मज्ञानस्य प्राशस्त्यं ख्याप्यते यद्वाऽग्न्यादीनां दुर्ज्ञेयत्वकथनेनात्मज्ञानस्य प्राशस्त्यं प्रदर्श्यते ॥

पहिले खण्डमें ब्रह्मज्ञान के लिये प्राणादि का उपयोगी न होना दिखाकर द्वितीय खण्ड में ब्रह्मज्ञानकी विलक्षणता और उस ज्ञान का दुःखसे प्राप्त होना पहिले कह चुके हैं कि ( अविज्ञातं विजानतां० ) जानने वाले ब्रह्मको नहीं जानते और नहीं जानने वालों से वह ज्ञात है इत्यादि विचार को सुनकर कोई कहै कि संसार में जो कुछ वस्तु है वह प्रमाणों से अवश्य जाना जाता है और जो वन्ध्या पुत्रादि के तुल्य असत् है उसे कोई भी नहीं देख वा जान सकता यदि ब्रह्म नहीं जाना जाय तो अज्ञात होने से ही उसका असत् होना सिद्ध है। मन्द बुद्धि मनुष्य को ऐसा संदेह हो तो उसके निवारणार्थ इतिहास के द्वारा ब्रह्म सत्ता दिखाते हैं। अथवा ब्रह्म

ज्ञान से ही देवों में अग्न्यादि श्रेष्ठ हुए तो ब्रह्म ज्ञान का प्रशस्त होना दिखावेंगे। अथवा जिस ब्रह्म को बडे २ तेजस्वी अग्न्यादि देवों ने भी कठिनाई से जाना उसका जानना कठिन है यह बात आख्यायिका से दिखाते हैं ॥

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। तऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १४ ॥ १ ॥**

ब्रह्म। ह। देवेभ्यः। विजिग्ये। तस्य। ह। ब्रह्मणः। विजये। देवाः। अमहीयन्त। ते। ऐक्षन्त। अस्माकम्। एव। अयम्। विजयः। अस्माकम्। एव। अयम्। महिमा। इति ॥ १४ ॥ १ ॥

अन्वितोर्थः—( ह ) किल ( ब्रह्म ) सर्वेभ्यो बृहत्तमं देवानां देव ईश्वराणामीश्वरश्चेतनानां चेतनम् ( देवेभ्यः ) अग्न्याद्यभिमानिदेवेभ्यः ( विजिग्ये ) विजयं प्राप्तवत् इति तत्त्वार्थः ( तस्य, ह, ब्रह्मणः ) ( विजये ) जाते तेषु व्याप्तस्य ब्रह्मण एव तेजसा वलेन च तेजस्विनो वलवन्तश्च भूत्वा ( देवाः ) अग्न्याद्यधिष्ठातारः ( अमहीयन्त ) ब्रह्मणएव महिम्ना महत्त्वं प्राप्नुवन्तः सन्तः ( ते ) देवाः ( ह ) किल ( ऐक्षन्त ) मन्यन्ते ( अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ) यथा कश्चित् शिष्यादिजनो गुर्वादिसामर्थ्येन समर्थो भूत्वाऽहं स्वयं समर्थ इति मन्येत यथा वा कस्यचिद्राजादेरनुकम्पया कश्चिद्धन्यो भूत्वा स्वस्यैव धनं मन्येत। एवं ब्रह्मसामर्थ्येन समर्था देवाः स्वस्यैव सामर्थ्यमिति दर्शयन्तोऽर्थात् ज्ञातारो मनुष्याअपि देवेषु महत्त्वं दृष्ट्वैव तेषामेवेदं तेजो बलं वेत्यज्ञानतो जानन्ति यथा मठाकाशादिषु महदाकाशस्यैव सर्वं महत्त्वं यथा वा पृथिव्यादिषु जलस्यैव शीतलत्वं यथा वा सर्वत्राग्नेरेवोष्णत्वं नानावस्तुषु नानाविधं प्रतीयते, एवमेव सर्वं महत्त्वमेकस्यैवेश्वरस्यास्ति। अ-

ग्न्यादिनामरूपेण ब्रह्मैव दहनादि करोति। अग्न्यादिषु ब्रह्मतो भिन्ना स्वतन्त्रा दहनादिशक्तिः कापि नास्ति। एवं मनुष्यादिष्वपि यदद्भुतं सामर्थ्यं लक्ष्यते तदपि तस्यैवास्ति नतु तेषाम्। अतोऽग्न्यादीनां मनुष्यादीनां चाभिमानएवाज्ञानादस्ति ब्रह्मणएव विजयेऽज्ञानान्मानुषाअपि मन्यन्तेऽस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १४ ॥ १ ॥

भाषार्थः-(ह) निश्चय कर (ब्रह्म) सबसे बडा देवों का देव ईश्वरों का ईश्वर चेतनों को भी चेतन करने वाला (देवेभ्यः) अग्नि आदि के अभिमानी देवोंसे (विजिग्ये) विजय को प्राप्त हुआ यही मुख्यार्थ है (तस्य, ह, ब्रह्मणः, विजये) उसी ब्रह्मके विजय होते समय उन पृथिव्यादि में व्याप्त जो ब्रह्म उसके तेज और बलसे ही बलवान् तेजस्वी होकर ( देवाः ) अग्नि आदिके अधिष्ठाता (अमहीयन्त) ब्रह्मकी ही महिमासे महत्त्वको प्राप्त होते हुए ( ते ) वे देव (ह) निश्चयकर ( ऐक्षन्त ) मानते हैं। ( अस्माकमेवायम् ) हमारी ही यह ( विजयः) जीत और ( अस्माकमेवायं महिमेति ) हमारी ही यह महिमा है। जैसे कोई शिष्य आदि मनुष्य गुरु आदिके सामर्थ्यसे समर्थ होकर मैं स्वयं समर्थ हूं ऐसा माने वा जैसे कोई राजादि श्रीमान् के प्रताप वा अनुग्रह से धनवान् होकर अपना ही धन समझे इसी प्रकार परमात्मा के तेज बल रूप सामर्थ्य से समर्थ हुए अग्न्यादि देवता "हमारा ही यह सामर्थ्य है,, ऐसा मानते हैं अर्थात् ज्ञाता मनुष्य भी उन देवों में तेज बल रूप का महत्त्व देख कर अज्ञान से मान लेते हैं कि यह इन्हीं का है। जैसे मठाकाशादि में महाकाश का ही सब महत्त्व है वा जैसे पृथिव्यादि में जलकी ही सब शीतलता है वा जैसे अनेक प्रकारके सब पदार्थों में अनेक प्रकार की गर्मी अग्नि की ही प्रतीत होती है। इसी प्रकार सब महिमा एक ईश्वर की ही है। चाहें यों कहो कि अग्न्यादि नाम रूपों से ब्रह्म ही जलानादि काम करता है अग्न्यादि में ब्रह्म से भिन्न स्वतंत्र कोई शक्ति नहीं है। इसी प्रकार जो २ मनुष्यादि में भी अद्भुत सामर्थ्य दीखता है वह भी उसी का है मनुष्यों का नहीं, अग्न्यादि तथा मनुष्यादि को अज्ञान से अभिमान है इससे ईश्वर के ही विजय में मनुष्य भी अज्ञान से अपना विजय तथा अपनी महिमा मानते हैं ॥ १४ ॥

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति ॥१५॥२॥

तत् । ह । एषाम् । विजज्ञौ । तेभ्यः । ह । प्रादुर्बभूव । तत् । न । वि । अजानन्त । किम् । इदम् । यक्षम् । इति ॥ १५ ॥

अन्वितोर्थः--( तत् ) ( एषाम् ) देवानां मिथ्येक्षणं ब्रह्म ( विजज्ञौ ) विज्ञातवत् सर्वज्ञत्वात्। मिथ्याभिमानेन न पराभवेयुरिति देवानुकम्पया मिथ्याभिमानापनोदनेन देवाननुगृह्णीयामिति ( तेभ्यः ) देवेभ्यो देवार्थम् ( ह ) निश्चयेन ( प्रादुर्बभूव ) स्वयोगमाहात्म्यनिर्मितेन विस्मयकारकरूपेण देवानां समक्षे प्रादुर्बभूव प्रत्यक्षरूपः साकारो बभूव ते देवाः (इदम्) अस्मत्तेजोऽभिभावुकम् ( किम् ) ( यक्षम् ) पूजनीयतमं वस्त्विति । यक्षपूजायामित्यस्याजन्तः प्रयोगः ( तत, न, व्यजानन्त ) सर्वज्ञसर्वशक्तिसर्वान्तर्यामिब्रह्मापेक्षया परिच्छिन्ना अल्पज्ञा अल्पशक्तिमन्तोऽग्न्यादयो देवा ब्रह्मैवेदं प्रादुर्भूतमिति नहि विज्ञातवन्तः ॥ १५ ॥

भावार्थः-(एषाम्) इन देवोंके (तत्) उस मिथ्या ज्ञानरूप अभिमान को ब्रह्म ने (विजज्ञौ) विशेष कर जान लिया कि इन देवों को मिथ्याभिमान हुआ है ऐसा सर्वज्ञ होने से जानकर ये देव मिथ्याभिमान से नष्ट न हों ऐसे अभिप्राय से देवों पर कृपा दृष्टि से मिथ्याभिमान नष्ट करके इन पर अनुग्रह करूं ऐसे अभिप्राय से ( तेभ्यः ) उन देवोंके लिये ( ह ) निश्चय से ( प्रादुर्बभूव) अपने योग्य माहात्म्यसे प्रकट किये आश्चर्य जनक रूप से देवोंके सामने प्रत्यक्ष साकार रूप हुआ । वे देव ( इदम् ) यह हमारे तेज को दबाने वाला ( यक्षम् ) सबसे अधिक तेजस्वी पूजनीय ( किम् ) क्या वस्तु है ऐसा सर्वज्ञ सर्वशक्तिमान, सर्वान्तर्यामी ब्रह्म की अपेक्षा से परिच्छिन्न अल्पज्ञ अल्पशक्ति वाले अग्न्यादि देव यह ब्रह्म ही प्रकट हुआ है ऐसा ( तत, न, व्यजानन्त ) नहीं जानते हुए ॥ १५ ॥

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ १६ ॥ ३ ॥

ते । अग्निम् । अब्रुवन् । जातवेदः ! । एतत् । विजानीहि । किम् । एतत् । यक्षम् इति । तथा इति ॥ १६ ॥

अन्वयः—( ते ) अग्न्यादयो देवाः सान्तर्भया विजिज्ञासवः ( अग्निम् ) देवाग्रगामिनं सर्वज्ञमिव जातवेदसम् ( अब्रुवन् ) हे ( जातवेदः ) जातं जायते वा वेदो ज्ञानं धनं वा यस्मात्तत्सम्बुद्धौ ( एतत्, किम् ) ( यक्षम्,इति ) इत्येतत्त्वम् ( विजानीहि ) यथा कुत्रचिद्विषये साश्चर्यो विचारः प्रवर्त्तते तस्मिन् समुदाये प्रधानमेवं वदन्ति भवानेतद्वदात्विति तद्वदत्रापि ते देवादेवेषु प्रधानमग्निमेव यक्षं ज्ञातुं प्रेरितवन्तः। अग्निश्च तेजस्वित्वेन प्राधान्यात् तथेत्युक्त्वा स्वीकृतवान् ॥१६॥

भावार्थः—( ते ) वे अग्नि आदि देव जानना चाहते हुए भीतर से भयभीत आश्चर्य पूर्वक ( अग्निम् ) देवोंमें अग्रगामी सर्वज्ञ के तुल्य जातवेद अग्निसे ( अब्रुवन् ) कहते हैं कि हे ( जातवेदः ! ) वेद्स नाम ज्ञान वा धनं जिससे उत्पन्न होता वा हुआ ऐसे अग्ने ( एतत्, किम्, यक्षम्, इति ) यह प्रकट हुआ पूर्वोक्त सर्वोपरि पूजनीयतम कौन है ? सो तुम जानो । जैसे किसी विषयमें आश्चर्य पूर्वक विचार चले कि यह क्या है ? तो प्रधान नाम अधिक बुद्धिमान् से कहा जाता है कि आप बताइये यह क्या है ! उसी प्रकार यहां भी उन देवोंने देवोंमें प्रधान अग्निसेही प्रेरणाकी कि यक्षको जानो और तेजस्वी होनेसे प्रधानताको प्राप्त हुए अग्निने ( तथेति ) कह कर यक्ष का अन्वेषण स्वीकार किया ॥ १६ ॥

**तदभ्यद्रवत्तमभ्यवदत् कोऽसीति । अग्निर्वा ऽअहमस्मीत्यब्रवीज्जातवेदा वाऽअहमस्मीति ॥ १७ ॥ ४ ॥**

तत् । अभ्यद्रवत् । तम् । अभ्यवदत् । कः । असि । इति । अग्निः । वै । अहम् । अस्मि । इति । अब्रवीत् । जातवेदाः । वै । अहम् । अस्मि । इति ॥ १७ ॥

अन्वयः—( तत् ) ( वै ) निश्चयेन तद्भूतं तेजोरूपं ब्रह्म [ कर्म ] ( अभ्यद्रवत् ) अभिमुखं प्राप्तवान्–अग्निरिति शेषः

( तम् ) गतवन्तं पिपृच्छिषुं जातवेदसं तत्समक्षेऽभिभूततेजस्कं तूष्णींभूतम् ( अभ्यवदत् ) अभिमुखमुक्तवत् ब्रह्म कर्तृ इति शेपः । त्वम् ( कः ) ( असीति ) ब्रह्मणा पृष्टोऽग्निः ( अहम्, अग्निरस्मीति )—( अहं, जातवेदाः, अस्मीति ) (अब्रवीत्) एवं नामद्वयेन प्रसिद्धतया स्वात्मानं श्लाघयन् स्वीयः परिचयः कारितः, जातवेदाइति पदेनाग्नेःसाभिमानत्वं सूचितम् ॥ १७ ॥

भावार्थः—( तत् ) अग्नि उस प्रकट तेजःस्वरूप ब्रह्मके ( अभ्यद्रवत् ) सन्मुख प्राप्तहुआ (तम्) यक्ष से पूछनेकी इच्छासे गये यक्ष के निकट जाने पर घट या दबगया है तेज जिसका इसीसे मौन हुए उस पूर्वोक्त अग्निदेव से ब्रह्म ( अभ्यवदत् ) कहता हुआ कि तू ( कः, असि ) कौन है, ब्रह्म के ऐसा पूछने पर अग्नि ने उत्तर दिया कि ( अहं, अग्निः, अस्मि ) मैं अग्नि हूं तथा ( वै ) निश्चय कर ( अहम् ) मैं ( जातवेदाः ) वेद वा ज्ञान जिससे उत्पन्न हुआ ऐसा ( अस्मि )हूं इस प्रकार ( अब्रवीत्) कहता हुआ ॥

इस प्रकार दो नामों से प्रसिद्ध अग्नि ने अपनी श्लाघा करते हुए ब्रह्म को अपना परिचय कराया । तथा जातवेदाः कहनेसे अग्नि ने अपना अभिमान दिखाया है ॥ १७ ॥

## तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वं दहेयम् । यदिदं पृथिव्यामिति ॥ १८ । ५॥

तस्मिन् । त्वयि । किम् । वीर्यम् । इति । अपि । इदम् । सर्वम् । दहेयम् । यत् । इदम् । पृथिव्याम् । इति ॥ १८ ॥ ५ ॥

अ०—तेजोमयं यक्षरूपधरं ब्रह्माब्रवीत् ( तस्मिन् ) उक्तनाम्नि ( त्वयि ) अग्नौ ( किम् ) ( वीर्यम् ) पराक्रमः सामर्थ्यम् । इत्येवं पृष्टे सोऽग्निरब्रवीद् ( अपीदं, सर्वं दहेयम् ) अत्र अपिः सम्भावनायाम् । यदिदं पृथिव्यामिति ॥ १८ ॥

भावार्थः—तेजोमय यक्षरूप धारी ब्रह्म बोला कि ( तस्मिन् ) उस तुझ अग्नि में ( किम् ) ( वीर्यम् ) क्या पराक्रम वा सामर्थ्य है इस प्रकार पूछने पर अग्नि बोला कि ( यत्, इदम्, पृथिव्याम् ) जो यह पृथिवी पर चराचर जगत् दीख पडता है ( इदम्, सर्वम्, अपि,

दहेयम् ) इस सब को भी क्षणमात्र में जलादूं। अर्थात् यह सम्भव है कि अग्नि का यदि पूरा २ तेज बढे तो सब जगत्को बहुत शीघ्र जलासक्ता है जब कभी अग्नितत्त्व तक प्रलय होता है तब अग्नि सब पदार्थों को थोडे काल में भस्म कर डालता है परन्तु ईश्वर की इच्छा के विना अग्नि आदि में शक्ति नहीं होसक्ती॥१८॥

**तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १९ । ६ ॥**

तस्मै । तृणम् । निदधौ । एतत् । दह । इति । तत् । उपप्रेयाय । सर्वजवेन । तत् । न । शशाक । दग्धुम् । सः । ततः । एव । निववृते । न । एतत् । अशकम् । विज्ञातुम् । यत् । एतत् । यक्षम् । इति॥१९॥

अ०—[ तस्मै ] अग्नये ब्रह्म कर्तृ [ तृणम् ] [ निदधौ ] तदग्रे स्थापितवत् । संस्थाप्य च [ एतत् ] [ दह ] इत्यवोचत् अग्निः ( तत् ) तृणम् ( सर्वजवेन ) सर्वोत्साहेन वेगेन च ( उपप्रेयाय ) प्राप्य तृणसमीपं गत्वा ( तत् ) तृणम् ( दग्धुम् ) ( न, शशाक ) न समर्थोऽभूत् । ( सः, ततः, एव ) तृणदहनकर्मणएव ( निववृते ) निवृत्य च देवानुक्तवान् ( नैतदशकं विज्ञातुं यदेतद् यक्षमिति ) ब्रह्माग्रे तृणमात्रमपि सामर्थ्यमग्न्यादिषु नास्तीत्युक्तं भवति । एवमनन्तसामर्थ्यवद् ब्रह्मास्तीत्यभिप्रायः ॥ १९ ॥

भाषार्थः—( तस्मै ) उस अग्नि के लिये ब्रह्म ने ( तृणम् ) एक तृण ( निदधौ ) धर दिया धर के ( एतत्, दह ) इस को जलादे ऐसा कहा ( तत् ) उस तृण को तुच्छ समझ कर ( सर्वजवेन ) सम्पूर्ण उत्साह और वेग से अग्नि ( उपप्रेयाय ) तृण के पास गया परन्तु ( तत् ) उस तृण को ( दग्धुम्, न, शशाक ) जलानेको समर्थ नहीं हुआ अर्थात् नहीं जला सका ( सः, ततएव ) उसी समय उस कामसेही ( निववृते ) हटगया और पृथक् होकर अन्य वायु

आदि से कहने लगा कि ( नैतदशकं विज्ञातुं यदेतद्यक्षमिति ) यह सर्वोपरि बलवान् सर्वपूज्य कौन है ! मैं इसको नहीं जान सकता । ब्रह्म के आगे अग्नि में तृणमात्र भी सामर्थ्य नहीं यह तात्पर्य निकलता है और जो कुछ सामर्थ्य है उतना भी कार्य अग्नि आदि ईश्वर की इच्छाके विना नहीं कर सकते । इस प्रकार ब्रह्म अनन्त सामर्थ्यवान् है यह अभिप्राय हुआ ॥ १९ ॥

अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति ॥ २० ॥ ७ ॥

अथ । वायुम् । अब्रुवन् । वायो । एतत् । विजानीहि । किम् । एतत् । यक्षम् । इति ॥ २० ॥ ७ ॥

अ०—( अथ ) अग्निनाज्ञातुमशक्यमिति ज्ञानानन्तरम् ( वायुम् ) अवशिष्टदेवेषु समर्थं बलवन्तम् ( अब्रुवन् ) अग्न्यादयो देवाइति शेषः । हे ( वायो ! ) त्वम् ( एतत्, विजानीहि किमेतत्—यक्षमिति ) प्राणाद्यात्मकः सर्वचेष्टानिमित्तं सर्वचराचरसंचारी लोकत्रयेऽव्याहतगतिर्वायुरेतद्यक्षं ज्ञास्यतीति मत्वादेवैरुक्तमेतदिति ॥ २० ॥

भावार्थः—( अथ ) अब अग्नि इसे नहीं जान सकता ऐसा जानने के बाद ( वायुम् ) शेष रहे देवताओं में समर्थ बलवान् वायु से अग्नि आदि ( अब्रुवन् ) कहने लगे कि हे ( वायो ! ) वायु तू (एतत् ) इस को ( विजानीहि ) विशेष कर जान कि (किमेतत्) ( यक्षम्, इति ) यह सर्वोपरि पूज्य बलवान् तेजस्वी यक्ष कौन है ? सब चराचर में विचरने वाला सब चेष्टाओं का निमित्त तीनों लोक में बे धडक चलने वाला प्राणादि रूप वायु इस यक्ष को जानेगा कि यह कौन है ? ऐसे विचार से देवोंने वैसा कहा है ॥ २० ॥

तदभ्यद्रवत्तमभ्यवदत् कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ २१ ॥ ८ ॥

तत् । अभ्यद्रवत् । तम् । अभ्यवदत् । कः । असि । इति । वायुः वै । अहम् । अस्मि । इति । अब्रवीत् । मातरिश्वा । वै । अहम् । अस्मि । इति ॥ २१ । ८ ॥

अन्वयः—स वायुः ( तत् ) ब्रह्म ( अभ्यद्रवत् ) आभिमुख्यमाप्तवान् ( तम् ) वायुम् ( त्वम्, कः, असि, इति ) ब्रह्म ( अभ्यवदत् ) सः ( वै ) निश्चयेन ( अहम् ) वानाद्गमनाद्गन्धनाद्वाऽन्वर्थः ( वायुः, अस्मि, इति ) ( वै ) निश्चयेन ( अहम् ) मातर्यन्तरिक्षे श्वयनाच्छयनाद्वाऽन्वर्थः ( मातरिश्वा, अस्मि, इति ) च ( अब्रवीत् ) ॥ २१ ॥

भावार्थः—वह वायु ( तत् ) उस ब्रह्म के ( अभ्यद्रवत् ) सन्मुख प्राप्त हुआ तब ( तम् ) उससे ब्रह्म ने तू ( कः, असि, इति ) कौन है ऐसा ( अभ्यवदत् ) कहा । तब वह वायु ( वै ) निश्चयकर ( अहम्, वायुः, अस्मि, इति ) मैं चलनेसे वा गन्ध को फैलाने से वायु हूं इस प्रकार तथा ( वै ) निश्चय ( अहम् ) मैं अन्तरिक्ष में चलने बढने वा फैलनेके कारण ( मातरिश्वा, अस्मि, इति ) अन्तरिक्ष में विचरने वाला मातरिश्वा नामक हूं इस प्रकार ( अब्रवीत् ) कहता हुआ ॥ २१ ॥

**तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीयं यदिदं पृथिव्यामिति ॥२२॥९॥**

तस्मिन् । त्वयि । किम् । वीर्यम् । इति । अपि । इदम् । सर्वम् । आददीयम् । यत् । इदम् । पृथिव्याम् । इति ॥ २२ । ९ ॥

अन्वयः—वायुं प्रति ब्रह्माब्रवीत ( तस्मिन्, त्वयि ) ( किम्, वीर्यम् ) किंभूतः पराक्रमोऽस्तीति । तदुपरि वायुराह— ( यदिदम् ) चराचरं जगत ( पृथिव्याम् ) दृश्यते ( इदम्, सर्वम्, अपि, आददीयम्, इति ) इत्थंभूता मयि शक्तिरस्तीति ॥ २२ ॥ ९ ॥

भावार्थः—वायु के प्रति ब्रह्म ( इति ) ऐसा कहता हुआ कि ( तस्मिन्, त्वयि ) उस तुझ में ( किम्, वीर्यम् ) क्या पराक्रम वा

शक्ति है। इसपर वायु बोला कि ( यदिदम् ) जो यह चराचर जगत् ( पृथिव्याम् ) पृथिवी पर दीख पडता है (इदम्, सर्वम्, अपि ) इस सबको भी ( आददीयम् ) ग्रहण करलूं-उठाले जाऊं वा उडादूं इस प्रकार की शक्ति मुझ में है ॥ २२ ॥ ९ ॥

तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ २३ । १० ॥

तस्मै । तृणम् । निदधौ । एतत् । आदत्स्व । इति । तत् । उपप्रेयाय । सर्वजवेन । तत् । न । शशाक । आदातुम् । सः । ततः । एव । निववृते । न । एतत् । अशकम् । विज्ञातुम् । यत् । एतत् । यक्षम् । इति ॥ २३ ॥ १० ॥

अन्वयः—ब्रह्म ( तस्मै ) वायवे ( तृणम्, निदधौ ) निधाय च ( एतत्, आदत्स्व, इति ) आह ( तत् ) तृणम्—आदातुं वायुः ( सर्वजवेन ) पूर्णवेगेन ( उपप्रेयाय ) तृणसमीपं गतवान् ( तत् ) तृणम् ( आदातुं, न, शशाक ) ( सः ) वायुः (ततएव) तृणसमीपात्तदानीमेव ( निववृते ) निवृत्तः। निवृत्यचाहम् (यत् ) ( एतत, यक्षम्, इति ) प्रत्यक्षं प्रवृद्धं किं किम्प्रकारकं वेत्येवम् ( एतत, विज्ञातुं, न, अशकम् ) नाहमद्विज्ञातुं शक्नोमीति। ब्रह्मापेक्षया वायावपि तृणमात्रं सामर्थ्यन्नास्तीत्याशयः॥ २३ ॥

भाषार्थः—ब्रह्म ने ( तस्मै ) उस वायुके लिये (तृणम्, निदधौ) एक तृण-तिनका धरादिया। और कहा कि ( एतत् ) ( आदत्स्व, इति ) इसको उठाले वा उडादे ( तत् ) उस तृणके उडादेने को वायु ( सर्वजवेन ) सब वेगसे ( उपप्रेयाय ) तृणके समीप गया तो भी ( तत् ) उस तृण को ( आदातुम् ) ग्रहणकरने वा उडाने को ( न, शशाक ) न समर्थ हुआ अर्थात् न उडासका ( सः ) वह वायु ( ततएव) उसी समय वहां तृणके समीपसे ( निववृते ) लौटआया और लौटकर उसने अन्य अग्नि आदि से कहा कि ( यत, एतत्,

यक्षम्, इति ) प्रत्यक्ष बढा हुआ तेजःस्वरूप यह क्या वा किस प्रकार का है ऐसा ( एतत्, विज्ञातुम्, न, अशकम् ) इसको मैं नहीं जानसकता। ब्रह्मकी अपेक्षा वायु में भी तृणमात्र सामर्थ्य नहीं यह इसका मुख्य आशय है ॥ २३ ॥

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥ २४ । ११॥

अथ । इन्द्रम् । अब्रुवन् । मघवन् । एतत् । विजानीहि । किम् । एतत् । यक्षम् । इति । तथा । इति । तत् । अभ्यद्रवत् । तस्मात् । तिरःऽदधे ॥ २४ ॥ ११ ॥

अन्वयः-( अथ ) वायोः प्रत्यावृत्त्यनन्तरमग्न्यादयो देवा हे ( मघवन्! ) ऐश्वर्यवन् त्वम् ( एतत् ) प्रत्यक्षमुद्भूतं वस्तु ( विजानीहि ) ( एतत् ) ( किम्, यक्षम्, इति ) एवम्प्रकारेण विजानीहीति पूर्वेणान्वयः । ( इन्द्रम् ) एतमुक्तप्रकारेण ( अब्रुवन् ) उक्तवन्तः । तदेन्द्रः ( तथेति ) स्वीकृत्य ( तत् ) ब्रह्म [ कर्म ] [अभ्यद्रवत्] अभिमुखं गतवान् ( तस्मात् ) इन्द्रगमनकारणादेव ( तिरोः, दधे) अन्तर्हितमभूत् । न तत्र यक्षमदृश्यतेन्द्रेण । इदमुक्तं भवति=अयं कथञ्चिच्छुद्धान्तःकरणोऽतिबली साभिमानः सिद्धसाधनश्चेज्ज्ञातुं शक्नुयादिति मत्वाऽस्य देवराजेन्द्रस्याप्यभिमाननिराकरणाय तद्गोचरीभूतमाश्चर्यजनकं वैद्युतमिव तेजास्तिरोभूतम् । इन्द्रो देवराजस्तस्यान्यदेवापेक्षयाधिकोऽभिमानस्तं विशेषेण निराकर्तुमग्न्यादिवत्संवादमात्रमपीन्द्रेण सह नैव कृतवानितीन्द्रस्य तिरस्कारः ॥ २४ ॥

भावार्थः—( अथ ) अब वायुके लौटआने के पश्चात् अग्न्यादि देव बोले कि हे ( मघवन् ) ऐश्वर्यवाले देवेन्द्र ! ( एतत्, किम्, यक्षम्, ) यह यक्ष पूज्य कौन है ऐसा तू ( एतत् ) इस प्रत्यक्ष तेज को ( विजानीहि ) विशेषकर जान इस उक्त प्रकारसे ( इन्द्रम् )

अपने अध्यक्ष स्वामी देवराज से ( अब्रुवन् ) कहते हुए। जब देव इन्द्र ने ( तथेति ) यक्षको जानने की प्रतिज्ञाकर स्वीकार किया ( तत् ) और उस ब्रह्म के ( अभ्यद्रवत् ) सन्मुख गया ( तस्मात् ) इन्द्र को आते देखने के कारण ( तिरोदधे ) ब्रह्म अन्तर्धान होगया वह यक्ष रूप तेज इन्द्र को नहीं दीखपडा अभिप्राय यह कि अपने अन्तःकरण की शुद्धि से मुझे कदाचित् अभिमानी इन्द्र जान सके ऐसा मान उस देवराज इन्द्र का अभिमान छुडानेके लिये आश्चर्य रूप विजुलीका सा तेज दिखाई देकर छिपगया। इन्द्र सब देवोंका राजा था इसी कारण छोटों से काम न होनेपर बडे से कहा गया था इन्द्र को अन्य देवों से अधिक अभिमान था उस अभिमानको नष्ट करनेके लिये अग्न्यादि के तुल्य इन्द्र के साथ ब्रह्मयक्ष ने बात भी नहीं की यही इन्द्रत्वाहंकार तोडने के लिये इन्द्र का अनादर तिरस्कार दिखाया है ॥ २४ ॥

**स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहु॰ शोभमानामुमां हैमवतीं ताꣳहोवाच किमे॰ तद्यक्षमिति ॥ २५ । १२ ॥**

सः। तस्मिन्। एव। आकाशे। स्त्रियम्। आजगाम। बहुशो-भमानां। उमाम्। हैमवतीम्। ताम्। ह। उवाच। किम्। एतत्। यक्षम्। इति ॥ २५ ॥ १२ ॥

अन्वयः—( सः ) इन्द्रो देवराजः( तस्मिन्, एव ) यतोद्भूतं तिरोभूतमिन्द्रश्च ब्रह्मणास्तिरोधानकाले यत्रासीत्तत्रैव ( आकाशे ) ( हैमवतीम् ) सुवर्णालङ्कारयुक्तामिव ( बहुशोभमानाम् ) अत्यन्तशोभायुक्ताम् ( उमाम् ) उमारूपधरां ब्रह्म विद्यां ब्रह्मज्ञानतत्पराम् ( स्त्रियम् )(आजगाम)प्राप्तवान्। इन्द्रः ( ताम् ) उमाम् ( उवाच ) ( ह ) खेदेन ( किम्, एतत्, यक्षम्, इति ) अत्र बहुशोभमानामिति वदता विद्यायाएवाधिक्येन शोभावत्त्वं सूचितं तथाचोक्तं—क्षीयन्तेखलुभूषणानि सततं वाग्भूषणंभूषणम् ॥ २५ ॥

इति तृतीयः खण्डः ॥

भावार्थः—(सः) वह देवराज इन्द्र ( तस्मिन्, एव ) जहां ब्रह्म प्रकट और अन्तर्धान हुआ तथा ब्रह्म के अन्तर्धान समय में इन्द्र जहां विद्यमान था इसी ( आकाशे ) अवकाश में ( हैमवतीम् ) सुवर्णके उत्तम २ आभूषणोंसे ( बहुशोभमानाम् ) अत्यन्त शोभित ( उमाम् ) ब्रह्मज्ञानमें तत्पर ब्रह्म सम्बन्धकी शोभासे अत्यन्त शोभावती पार्वती रूप धारिणी ब्रह्मविद्या रूप ( स्त्रियम् ) स्त्रीको ( आजगाम ) प्राप्त हुआ। तब इन्द्र ( ताम् ) उस उमासे (उवाच) (ह) कष्टके साथ इस प्रकार कहता हुआ कि (एतत् ) यह (यक्षम्, इति ) पूजनीय यक्ष ( किम् ) क्या है अर्थात् यक्षके अन्तर्धान होजाने में इन्द्रको बडा क्लेश हुआ कि मैं इसको न जानसका तो मेरी सर्वस्व हानि है इस कारण कष्ट पूर्वक पूछा। और ब्रह्म भी इस अभिप्रायसे अन्तर्धान हुआ कि मैं इन्द्रत्वाभिमानको नष्ट करके उमारूप विद्या के द्वारा इसको अपना स्वरूप जताऊं यहां बहुशोभमाना कहने द्वारा विद्या की शोभा को सर्वोपरि जताया है। सो नीति में भी कहा है कि चांदी सुवर्णके भूषण नष्ट भ्रष्ट होजाते हैं परन्तु विद्या युक्त वाणीही मुख्य भूषण है ॥ २५ ॥

यह तीसरा खण्ड समाप्त हुआ ॥

## सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो विदाञ्चकार ब्रह्मेति॥ २६॥

सा। ब्रह्म। इति। ह। उवाच। ब्रह्मणः। वै। एतत्। विजये। महीयध्वम्। इति। ततः। विदाञ्चकार। ब्रह्म। इति ॥ २६ ॥

अ०—( सा ] उमा ( ह ) प्रसिद्धौ तदुद्भूतं तेजोमयं यक्षम् ( ब्रह्म ) अस्ति इति ( उवाच ) ( वै ) निश्चयेन स्वस्यैवाभिमते ( ब्रह्मणः ) ब्रह्मणः ( विजये ) ( एतत् ) ( महीयध्वम् ) महीयमानं प्राप्नुत ब्रह्मसेवया महान्तो भवत। अर्थादेतन्महत्त्वं यत्संग्रामेष्वसुराणां वृत्रादीनां विजयः स ब्रह्मण एवास्ति तेनैव जिता असुरा न युष्माभिर्यूयं तु निमित्तमात्रमास्त ( ततः ) तस्मादुमाकृतोपदेशात् ( ह, एव ) ( ब्रह्म, इति, विदाञ्चकार ) यक्षं ब्रह्मैवास्तीति विज्ञातवान्। अव्ययद्वयं सर्वथा स्वातन्त्र्यनिवृत्त्यर्थम्। अर्थादिन्द्रोप्युमारूपविग्रहवतीविद्यो-

पदेशमन्तरा ब्रह्मात्मानं ज्ञातुमशक्त इत्युक्तं भवति । सर्वस्योपरि विजयो महत्त्वं च ब्रह्मण एवास्ति न . तस्य कश्चिदध्यक्षः समो वा विद्यते इत्यपि सूच्यते ॥ २६ ॥

भाषार्थः—( सा ) वह उमारूप विग्रहवती ब्रह्मविद्या ( इति, उवाच ) यह कहती हुई कि ( ह ) यक्षरूप जो तेज प्रकट हुआ था वह ( ब्रह्म ) ब्रह्म है । तुम लोग ( वै ) ( ब्रह्मणः ) उसी ब्रह्मके (विजये) विजय वा महत्त्वमें महत्त्वको प्राप्त होओ ईश्वरकी भक्ति सेवासे बडे बनो जिसको तुम अपना विजय समझते थे वह ब्रह्म का ही है अर्थात् अबतक जो संग्रामोंमें वृत्रादि असुरों को तुमने विजय किया है वह उसी ब्रह्मका विजय था क्योंकि उसी ईश्वर ने असुरों को जीता था तुम लोग तो उस विजय में निमित्त मात्र थे ( ततः ) उस उमाके उपदेश से ( ह, एव ) ही ( ब्रह्म, इति , विदाञ्चकार ) इन्द्र ने भी जाना कि वह यक्ष ब्रह्म ही है। "ह,एव" इन दो एकार्थ शब्दोंके प्रयोग से प्रतीत होता है कि वह इन्द्र भी विग्रहवती उमारूप विद्या के किये उपदेशकी सहायता विना स्वतन्त्र ब्रह्मको नहीं जान सकता तथा सब संसार के ऊपर विजय और स्वामित्व एक परमेश्वर का ही है उस के ऊपर वा उस के तुल्य जगत् में कोई नहीं यह भी सूचित होता है ॥ २६ ॥

## तस्माद्वा एते देवा अतितरामिवान्यान्देवान् यदग्निर्वायुरिन्द्रस्तेह्येनन्नेदिष्ठं पस्पर्शुस्तेह्येनत्प्रथमोविदाञ्चकार ब्रह्मेति॥ २७।२॥

तस्मात् । वै । एते । देवाः । अतितराम्ऽइव । अन्यान् । देवान्। यत् । अग्निः । वायुः । इन्द्रः । ते । हि । एनत् । नेदिष्ठम् । पस्पर्शुः। ते । हि । एनत् । प्रथमः । विदाञ्चकार । ब्रह्म । इति ॥ २७ ॥ २ ॥

अ०—( अग्निः, वायुः ) देवौ ( इन्द्रः ) तृतीयो देवराजः ( ते, हि ) एते त्रयो हि ( एनत् ) पूर्वोक्तं यक्षरूपमुद्भूतं तेजः ( नेदिष्ठम् ) अत्यन्तसमीपम् ( पस्पर्शुः ) स्पृष्टवन्तः ( ते, हि) अग्न्यादयः ( एनत ) उक्तं यक्षम् ( प्रथमः ) अन्यापेक्षया पूर्वम् । क्रियाविशेषणमिदम् । लिङ्गव्यत्ययः ( विदाञ्चकार )

विदांचक्रुः । इन्द्र उमाद्वारा इन्द्रद्वारा चाग्निवायू इति शेषः । अत्र वचनव्यत्ययः । यत इमे पूर्वं ब्रह्म ज्ञातवन्तः ( तस्मात् ) अतएव कारणात् ( एते ) अग्न्यादयः ( देवाः ) त्रयो देवाः ( अन्यान्, देवान् ) श्रोत्रादीन् ( अतितराम् ) अतिक्रम्य प्रशस्ता बभूवुः । एषामग्न्यादीनां व्याहृत्यादिरूपेण सर्वकर्मसु मुख्यत्व आदौ यक्षरूपब्रह्मसम्बन्ध एव कारणमित्यर्थः ॥२७॥

भाषार्थः—( अग्निः, वायुः ) अधिष्ठानों सहित अग्नि वायु देव ( इन्द्रः ) तीसरा देवराज इन्द्र ( ते, हि ) वे ही तीनों ( एनत् ) इस पूर्वोक्त प्रकट हुए यक्षरूप तेजको ( नेदिष्ठम् ) अत्यन्त समीप से ( पस्पर्शुः ) स्पर्श करते हुए और (ते, हि) वे ही अग्न्यादि ( एनत् ) इस उक्त यक्षको सबसे पहिले ( विदाञ्चकार ) जानते हुए अर्थात् इन्द्र ने उमासे और अग्निवायु ने इन्द्र से जाना । जिस कारण इन्हों ने पहिले ब्रह्मको जाना ( तस्मात् ) इसी कारण ( एते ) ये अग्नि आदि ( देवाः ) तीनों देव ( अन्यान्, देवान् ) अन्य देवों का उल्लंघन कर ( अतितराम् ) प्रशंसा को प्राप्त हुए अर्थात् इन अग्नि आदि के व्याहृत्यादि रूपसे सब कर्मोंमें मुख्य श्रेष्ठ माने जाने का यक्षरूप ब्रह्मके साथ पहिले सम्बन्ध होनाही कारण है ॥२७ ॥

**तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥ २८ ॥**

तस्मात् । वै । इन्द्रः । अतितराम्ऽइव । अन्यान् । देवान् । सः । हि । एनत् । नेदिष्ठम् । पस्पर्श । सः । हि । एनत् । प्रथमः । विदाञ्चकार । ब्रह्म । इति ॥ २८ ॥ ३ ॥

अन्वयः—यतः करणात् ( इन्द्रः ) देवराजः( एनत् ) आविर्भूतं यक्षस्वरूपं ब्रह्म ( नेदिष्ठम् ) अतिसमीपम् ( पस्पर्श ) ( प्रथमः ) पूर्वम् ( सः, हि ) इन्द्र एव इदं यक्षम् ( ब्रह्मेति, विदाञ्चकार ) विवेद ( तस्मात् ) कारणात् ( अन्यान् ) अग्न्यादीन् ( देवान् ) ( वै ) निश्चयेन ( अतितराम् ) अतिक्रान्तवान् । अर्थात् सर्वदेवेषु पूज्यः श्रेष्ठो बहुमान्य आसीत्२८

भावार्थः—जिस कारण ( इन्द्रः ) देवराज इन्द्र ( एनत् ) इस प्रकट हुए यक्षरूप ब्रह्मको ( नेदिष्ठम् ) अतिसमीप से ( प्रथमः ) पहिले ( पस्पर्श) स्पर्श करता हुआ ( सः, हि) वही इन्द्र देव यह यक्ष ( ब्रह्म, इति ) ब्रह्म है ऐसा ( विदाञ्चकार ) जानता हुआ ( तस्मात् ) इसी कारण ( अन्यान्, देवान् ) अग्न्यादि नाम रूपात्मक देवों को ( वै ) निश्चय (अतितराम्) उल्लंघन करता हुआ अर्थात् सब देवताओं में श्रेष्ठ पूज्य माननीय हुआ ॥ २८ ॥

**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इतीति न्यमीमिषदा३ इत्यधिदैवतम् ॥२९॥**

तस्य । एषः । आदेशः । यत् । एतत् । विद्युतः । व्यद्युतत् । आ । इति । इति । न्यमीमिषत् । आ । इति । अधिदैवतम् ॥ २९ ॥ ४ ॥

अन्वयः—उक्तार्थमेव द्रढयितुमाह ( तस्य ) उक्तस्याविर्भूतस्य तिरोभूतस्य च ब्रह्मणः ( एषः ) प्रत्यक्षः ( आदेशः ) उपमयोपदेशः ( विद्युतः ) तडितस्तेजःस्वरूपं ज्योतिः ( व्यद्युतत्, आ ) व्यद्योतिष्टेव । आ इत्युपमार्थे । ( इति ) इत्थम्भूत आदेशः ( इति ) एवं वदन्ति ( न्यमीमिषत, आ ) अत्राप्याकार उपमार्थे । यथा चक्षुर्निमेषं करोति तथाऽयं प्रादुर्भावतिरोभावरूप आदेशः ( इति ) एवम्प्रकारकम् ( अधिदैवतम् ) देवताविषयं व्याख्यानं ब्रह्मणोस्ति । यथा विद्युत् क्षणमात्रं नेत्रतेजसोऽभिभवित्री दृश्या भूत्वाऽन्तर्हिता भवति यथा वा चक्षुष उन्मीलने निमेषमात्रं किञ्चिदत्यल्पकालमाश्चर्यरूपं दृश्येत निमीलने च सद्यस्तिरोभवेत्तथैवाग्न्यादिदेवतेजोभिभावुकस्य ब्रह्मणः प्रकाशतिरोभावाभ्यामुपदेशोऽस्तीति भावः ॥ २९ ॥

भावार्थः—पहिले मन्त्र में कहे विषय को दृढ करते हैं (तस्य ) उस प्रकट वा अन्तर्धान हुए यक्षरूप ब्रह्म का ( एषः ) यह पूर्वोक्त प्रकारका ( आदेशः ) किया उपदेश प्रत्यक्ष ज्ञान है ( विद्युतः ) बिजुली की तेजः स्वरूप कान्ति ( व्यद्युतत्, आ ) जैसे चमकजाती और छिपजाती है ( इति ) इसी प्रकार का यह उपदेश है ( इति ) ऐसा विद्वान् लोग कहते हैं ( न्यमीमिषत्, आ ) यहां भी आकार

उपमार्थ है जैसे नेत्र खुल मिचजावें वैसे ब्रह्मका प्रकट होने वा छिपने रूप उपदेश है ( इति ) इस प्रकार का ( अधिदैवतम् ) देवता विपयक दृष्टान्त से ब्रह्म का उपदेश है। जैसे नेत्र के तेज को दबाने वाली विजुली क्षणमात्र दिखाई देकर अन्तर्धान हो जाती वा जैसे नेत्रके खोलने में कोई वस्तु क्षणभर दीख पड़े और मींचते ही तत्काल अन्तर्धान होजावे वैसे ही अग्न्यादि देवतोंके तेज दबानेवाले ब्रह्मके प्रकट होने और छिपने करके उपदेश है यह इस का मुख्य अभिप्राय है ॥ २९ ॥

## अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥३० । ५ ॥

अथ । अध्यात्मम् । यत् । एतत् । गच्छतिऽइव । च । मनः । अनेन । च । एतत् । उपस्मरति । अभीक्ष्णम् । सङ्कल्पः ॥ ३० ॥ ५ ॥

अन्वयः—( अथ ) आधिदैविकोपदेशानन्तरम् ( यत्, एतत् ) उक्तगुणविशिष्टं ब्रह्म प्रति ( मनः ) कर्त्तृ ( गच्छति, इव ) इति ध्यायेदिति शेषः ( च ) समुच्चये ( अनेन ) मनसा ब्रह्म ( उपस्मरति ) समीपतः स्मरति लेट् स्मरेदित्यर्थः। ( सङ्कल्पः ) अन्तःकरणस्य निश्चयात्मिका वृत्तिश्च ( अभीक्षणम् ) मुहुर्मुहुर्ब्रह्मविषया कार्या। एतत्सर्वम् ( अध्यात्मम् ) आत्मन्यन्तःकरणे विवेचनम् । ब्रह्म जिज्ञासुर्दुःखान् मुमुक्षुः पुरुष एवं ध्यायेत् मदीयं मनो यक्षसन्निधावग्न्यादयइव ज्योतीरूपं ब्रह्म प्रति गच्छतीव मम सङ्कल्पः सदैव ब्रह्मप्राप्तय उद्युक्तः स्यादहं च तन्मनाः सन् नित्यं ब्रह्मैव स्मरेयमिति भावः ॥ ३० ॥

भाषार्थः—( अथ ) अब देव सम्बन्धी उपदेश के पश्चात् ( यत्, एतत् ) जिस इस उक्त गुणवाले ब्रह्म के प्रति ( मनः ) मेरा मन ( गच्छति, इव) चलतासा है ऐसा ध्यान मनुष्य करे ( च ) और ( अनेन ) इस मनसे ब्रह्मका ( उप, स्मरति ) समीपवर्त्ती हो स्मरण करे और ( सङ्कल्पः ) अन्तःकरण की निश्चयरूप वृत्ति [ तरङ्ग ] ( अभीक्ष्णम् ) वार २ ब्रह्मके ज्ञान ध्यान में लगावे। यह सब ( अध्यात्मम् ) शरीर के भीतर अन्तःकरण विपयक अध्यात्म उपदेश है। अर्थात् जिसको ब्रह्मके जानने और दुःखसे छूटने की इच्छा

हो वह पुरुष ऐसा ध्यान करे कि मेरा मन यक्षके समीप अग्न्यादि जानेके तुल्य ज्योतिःस्वरूप ब्रह्मकी ओर मानो चलाजाता है। मेरा सङ्कल्प सदैव ब्रह्मकी प्राप्ति के अर्थ उद्यत रहे और मैं उसी में चित्त लगाकर नित्य ब्रह्मका ही स्मरण करूं ॥ ३० ॥

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाऽभिहैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ३१ ॥ ६ ॥**

तत्। ह। तद्वनम्। नाम। तद्वनम्। इति। उपासितव्यम्। सः। यः। एतत्। एवम्। वेद। अभि। ह। एनम्। सर्वाणि। भूतानि। संवाञ्छन्ति ॥ ३१ ॥ ६ ॥

अन्वयः—( तत, ह ) प्रसिद्धं पूर्वोक्तं ब्रह्म ( तद्वनम् ) तेषां तैर्वा विद्वद्भिर्दुःखान्मुमुक्षुभिः प्राणिभिर्वनं वननीयं सेवनीयमिति ( नाम ) प्रसिद्धम्। उक्तकारणात् ( तद्वनम् ) एतन्नामकं ब्रह्म ( इति ) एवम्प्रकारेण ( उपासितव्यम् ) मनुष्यैरिति शेषः ( सः, यः) मनुष्यः ( एतत् ) ब्रह्मणः ( एवम् ) उक्तप्रकारेणोपासनम् ( वेद ) ( अभि ) सर्वतो जानाति ( एनम् ) उक्तमुपासकम् ( सर्वाणि ) भूतानि ) (संवाञ्छन्ति, ह) निश्चयेनाभिलपन्ति। अत्र तद्वनमित्युपासितव्यमित्यस्यायमाशयः—तस्य प्राणिजातस्य वनं संभजनीयं सोपाधिकं साकारं सगुणं विष्णवादिरूपमेव संभवति। प्रकटस्य सगुणस्यैवोपासनमग्न्यादयः कृतवन्तस्तस्मात्तद्वनपदेन सगुणोपासनमेव दर्शितम् ॥ ३१ ॥

भाषार्थः—( तत, ह ) वह पूर्वोक्त ब्रह्म ( तद्वनम् ) उन दुःख से छूटने की इच्छावाले विद्वान् मनुष्यों को सेवन करनेयोग्य (नाम) प्रसिद्ध ( तद्वनम् ) पहिले कहे अर्थसे उसका नाम तद्वन है (इति) इस प्रकार मनुष्यों को ( उपासितव्यम् ) उपासना करनी चाहिये सः, यः ) सो जो मनुष्य ( एतत् ) इस ब्रह्मकी (एवम् ) उक्तप्रकार से उपासना करना ( अभि, वेद ) सब प्रकार जानता है ( एनम् ) उस उपासक की ( सर्वाणि ) सब ( भूतानि ) प्राणी ( ह, संवाञ्छन्ति )निश्चयसे चाहना करते हैं। अर्थात् विद्वान् लोग जिसकी

भक्ति करते आये हैं वह भक्तवत्सल है ऐसी उपासना करनी चाहिये। इस मन्त्रमें तद्वनकी उपासना कही है उसका अभिप्राय यह है कि मनुष्यादि प्राणियों को भजने सेवने योग्य सगुण साकार सोपाधिक विष्णवादिरूप ही होसकता है। यक्षरूप से प्रकट हुए सगुण साकारके समीप ही अग्न्यादि गये थे इससे सिद्ध हुआ कि तद्वन पद से सगुणकी ही उपासना दिखायी है ॥ ३१ ॥

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद् ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥३२।७॥**

उपनिषदम्। भोः। ब्रूहि। इति। उक्ता। ते। उपनिषद्। ब्राह्मीम्। वाव। ते। उपनिषदम्। अब्रूम। इति ॥ ३२ ॥

अन्वयः—अस्यामुपनिषदि प्रारम्भाद्गुरुशिष्यसंवादः प्रवृत्तः स एवोपसंहारे पुनः प्रदर्श्यते। शिष्यः (इति) एवम् आह (भोः) आचार्य! (उपनिषदम्) ब्रह्मविद्याम् (ब्रूहि) वद। आचार्य आह (ते) तुभ्यम् (उपनिषत्) ब्रह्मविद्या (उक्ता) पूर्वं या ब्रह्मविद्योक्ता तत्र यदि किमप्यवशिष्टं तद्वदेति शिष्याभिप्रायः। पूर्णतया मया ब्रह्मविद्योक्ता न तत्र किमप्यवशिष्टमित्याचार्यस्याशयः। तदेव द्रढयितुं पुनराह (वाव) निश्चयेन (ते) तुभ्यम् (ब्राह्मीम्) ब्रह्मसम्बन्धिनीम् (उपनिषदम्) (अब्रूम) उक्तवन्तः (इति) पूर्णम्। नात्र किमपि वक्तव्यमिति भावः ॥ ३२ ॥

भावार्थः—इस उपनिषद्में प्रारम्भ से गुरु शिष्यका संवाद चलाया गया है वही अब समाप्ति में पुनः दिखाया जाता है शिष्य (इति) इस प्रकार बोला कि (भोः) हे पूज्य गुरो! (उपनिषदम्) ब्रह्मविद्याको (ब्रूहि) कहिये। आचार्य बोला कि (ते) तेरे अर्थ (उपनिषत्) ब्रह्मविद्या (उक्ता) कहचुका। इस प्रसंग में कुछ सारांश शेष रहा हो तो कहिये यह शिष्यके पूछने का अभिप्राय है। मैंने पूर्ण प्रकार से ब्रह्मविद्या कहदी उसका कुछ अंश शेष नहीं यह गुरुका आशय है। इसको और भी दृढ करते हैं। (वाव) निश्चयकर (ते) तेरेलिये (ब्राह्मीम्) ब्रह्मसम्बन्धिनी (उपनिषदम्) विद्या को (अब्रूम) कहचुके हैं (इति) पूरा कहागया अब यहां कुछ कथनीय नहीं ॥ ३२ ॥

तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् ॥३३ । ८॥

तस्यै । तपः । दमः । कर्म । इति । प्रतिष्ठा । वेदाः । सर्वाङ्गानि । सत्यम् । आयतनम् ॥ ३३ ॥ ८ ॥

अन्वयः—ब्रह्मविद्या तु पूर्णतयोक्ता तस्या विशिष्टं साधनमुच्यते ( तस्यै ) उपनिषदे ब्रह्मविद्याप्राप्त्यर्थम् ( तपः ) द्वन्द्वसहनं चान्द्रायणादिव्रतानि वा (दमः) मनसो वशीकरणम् ( कर्म ) श्रौतमग्निहोत्रादिकं स्मार्त्तंच ( इति ) एतान्येव त्रीणि मुख्यसाधनानि । एषां च साधनान्याह ( प्रतिष्ठा ) सत्कर्मानुष्ठानेन पूजाप्राप्तिः शुद्धस्थाने शरीरेन्द्रियमनोबुद्धीनां चाञ्चल्यरहिता स्थितिर्वा ( वेदाः ) ऋगादिवेदाः ( सर्वाङ्गानि ) शिक्षादिषडङ्गानि । एषां सर्वेषामध्ययनाध्यापने ( सत्यम् ) सर्वस्य (आयतनम्) स्थानम् । सत्ये सर्वं प्रतिष्ठितमिति वचनात् । मनोवाक्कायकर्मभिः सत्यस्याचरणं ब्रह्मज्ञानस्य मुख्यं श्रेष्ठतमं साधनम् । अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेकं विशिष्यते॥ इति वचनात सत्यं सर्वोपरिस्थितम् ॥ ३३ ॥

भाषार्थः—इस उपनिद्में पूर्णप्रकार से ब्रह्मविद्या कहदी अब उसके विशेष साधन कहते हैं । ( तस्यै ) उस ब्रह्मविद्याकी प्राप्ति के लिये वा ब्रह्मज्ञानरूप बुद्धि होनेके लिय ( तपः ) मान अपमान, सुख दुःख, हानि लाभ जीत हार, स्तुति निन्दा, शीत उष्ण भूख प्यास इत्यादि परस्पर विरुद्ध दो २ विषयोंका सहना अर्थात् मान होने से न विशेष आनन्द मानना और न अपमान से दुःख मानना किन्तु समदृष्टि रखना तथा चांद्रायणादि व्रत जो यवमध्यचान्द्रायण पिपीलिकामध्यचान्द्रायण यतिचान्द्रायण शिशुचान्द्रायण आदि नामों से धर्मशास्त्रों में व्याख्यात हैं उनका विधि पूर्वक अनुष्ठान करनारूप तप करे । तपका यह अर्थ व्यास जी ने योगभाष्य में किया है । ( दमः ) मनको वशमें करना ( कर्म ) वेदोक्त अग्निहोत्रादि वा धर्मशास्त्र में कहा सदाचरणादि कर्म ( इति ) ये ही तीनों

मुख्य ब्रह्मज्ञानके साधन हैं। और इन तप आदिके उपयोगी साधन ये हैं ( प्रतिष्ठा ) लोकमें बुरे कर्मों से निन्दा न हो किन्तु शुभ कर्मों से प्रतिष्ठा हो [ निन्दा होजाने से चित्त ठीक नहीं रहता इससे तप आदि में वाधा पडती है ] अथवा शुद्ध स्थान में शरीर इन्द्रिय मन और बुद्धि की चञ्चलतारहित स्थिति प्रतिष्ठा कहाती है। (वेदाः ) ऋग्वेदादि चार ( सर्वाङ्गानि ) शिक्षादि छः अङ्ग अर्थात् शिक्षा, कल्प, व्याकरण, निरुक्त छन्दःशास्त्र और ज्योतिःशास्त्र इन वेद वेदाङ्गोंका पढना पढाना सबके ( आयतनम् ) आधार ( सत्यम् ) सत्यका मन वचन कर्म से अनुष्ठान करना। सबका आधार सत्य इस लिये है कि सत्य सर्वथा छूटने से किसी का विश्वास नहीं रहता किन्तु सत्य के आश्रयपर ही सब व्यवहार चल रहे हैं। सत्य का आचरण ब्रह्मज्ञान का सर्वोत्तम साधन है। इसी लिये धर्मात्मा लोगों ने ऐसी प्रशंसा की है कि हजार अश्वमेध यज्ञ करलेनेकी अपेक्षा सत्यका अनुष्ठान बडा फल देता है। इत्यादि कारण सत्य सर्वोपरि है ॥ ३३ ॥

**यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ३४ । ९ ॥**

यः । वै । एताम् । एवम् । वेद । अपहत्य । पाप्मानम् । अनन्ते । स्वर्गे । लोके । ज्येये । प्रतितिष्ठति प्रतितिष्ठति ॥ ३४ । ९ ॥

अन्वयः—( यः ) पुरुषः ( वै ) निश्चयेन ( एताम् ) केनेषितमित्याद्युपनिषत्प्रतिपाद्यां ब्रह्मविद्याम् ( एवम् ) उक्तप्रकारेण ( वेद ) जानाति सः ( पाप्मानम् ) अनादिकालसंचितवासनावासितमन्तःकरणस्थं कल्मषम् ( अपहत्य ) विनाश्य ( अनन्ते ) अविनाशिन्यपरिच्छिन्ने वा (स्वर्गे ) आनन्दमये सुखस्वरूपे ( लोके ) सूक्ष्ममत्या दर्शनीये ज्ञातव्ये ( ज्येये ) सर्वेभ्यः श्रेष्ठतमे परमात्मनि ( प्रतितिष्ठति प्रतितिष्ठति ) अवश्यं—प्रतिष्ठितो भवति। अतिशयद्योतनार्थोऽभ्यासो ग्रन्थसमाप्तिद्योतनार्थो वा ॥ ३४ ॥

भाषार्थः—जो पुरुष ( वै ) निश्चयकर ( एताम् ) केनेपितम्० इत्यादि मन्त्रों से कही ब्रह्मविद्या को ( एवम् ) ऊपर कहे साधनों सहित ( वेद ) जानता है वह ( पाप्मानम् ) अनादि काल से सञ्चित अन्तःकरण की वासनारूप रस्सियों से बंधे हुए अज्ञानान्धकार रूप पाप को नष्टकर (अनन्ते) अविनाशी वा अपरिच्छिन्न (स्वर्गे ) सुखस्वरूप ( लोके ) सूक्ष्मबुद्धि वा ज्ञान दृष्टि से देखने जानने योग्य ( ज्येये ) सबसे श्रेष्ठ परमात्मा में ( प्रतितिष्ठति, प्रतितिष्ठति ) आनन्दपूर्वक सब बाधाओं से छूटकर अवश्य स्थित होता है एक शब्द को दो वार कहने का प्रयोजन अतिशय कर स्थिति जताने तथा ग्रन्थ की समाप्ति जताने के लिये है ॥ ३४ ॥

यह तलवकार उपनिषद्का भाष्य पूरा हुआ ॥ ओ३म् शान्तिः३

## इति श्रोत्रियभीमसेनशर्मकृतं तलवकारोपनिषद्भाष्यं समाप्तम् ॥



## धर्मसम्बन्धी पुस्तकों का सूचीपत्र ॥

ब्राह्मणसर्वस्व मासिकपत्र प्रतिभाग १।) एकत्र लेने पर ६ भागका ७॥) वार्षिक मूल्य २।) अष्टादशस्मृति भा० टी० सहित ३) सतीधर्म संग्रह ।) श्रीमद्भगवद्गीता सभाष्य २॥) पतिव्रतामाहात्म्य ≡) भर्तृहरि नीतिशतक भा० टी० ≡) वैराग्य शतक भा० टी० ≡) शृङ्गारशतक भा० टी० ≡) दर्शपौर्णमास पद्धति भा० टी० १) इष्टिसंग्रह पद्धति श्रौतविषय ।) स्मार्त्तकर्म पद्धति भा० टी० ।) त्रिकाल सन्ध्या )॥ कातीय तर्पण सविधि -) भोजन विधि )॥ यज्ञपरिभाषा सूत्र संग्रह संस्कृत भाषा टीका युक्त ॥) हरिस्तोत्र भा० टी० )। शिव स्तोत्र भा० टी० )। पञ्चमहायज्ञविधि भा० टी० =) मानवगृह्यसूत्र भाषा टीका ॥) आपस्तम्बगृह्यसूत्र भा० टी० ।) गर्भाधानादि नव संस्कारपद्धति भा० टी० ≡) उपनयनपद्धति भा० टी० ≡) सनातन हिन्दूधर्म व्याख्यान दर्पण ( स्वामी आत्माराम जी कृत ) ५६ व्याख्यान युक्त मू० ३॥) आर्यमत निराकरण प्रश्नावली ।) विधवा विवाह निराकरण -) सत्यार्थप्रकाश समीक्षा -) आर्यसमाज का आदम ।) मुक्तिप्रकाश -) दयानन्दलीला )॥ भजन पचासा -) दुनियांकी रीति )। हनुमान चालीसा )॥ यजुर्वेदभाष्यसमीक्षा -)॥ दयानन्दहृदय )। दयानन्द मत दर्पण -) दयानन्द परास्त नाटक ≡) धर्मसन्ताप )। विदेशी चीनीसे हानि )॥ धर्म रक्षा और भारत विनय )। वन्देमातरम् )। अष्टाध्यायी सटीक १॥) गणरत्न महोदधि व्याकरण गणपाठ श्लोकवद्ध व्याख्या सहित १) धातुपाठ साधन सूत्रों सहित ।) वार्तिकपाठ सटीक सोदाहरण ॥) आरोग्यता पद्धति ॥) विशेष हाल बड़ा सूचीपत्र मंगाकर देखिये॥

पता—मैनेजर ब्रह्मप्रेस-इटावा सिटी।